# अनुक्रमणिका

॥ ॐ श्री गणेशाय नमः ॥
॥ ॐ श्री गुरुभ्यो नमः ॥
॥ हरिः ॐ ॥

# Preface

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

This book has been primarily inspired by two pieces of work — one, my *thāthā's* beautiful hand-written composition of *ślokās*, for his grand-children, and *mantrapushpam*, the excellent compilation of *vedamantrās* and *stotrās*, from Ramakrishna Mutt.

In this book, several wonderful stotras have been compiled. One of the aims of this book is to provide ready access to a number of *stotrās* in a compact form. I've often had to refer to a bundle of books for each *stotram*. This book, I hope, would prove to be really useful for people who would like to carry around these *stotrās* when they travel around, or would like a handy small book containing all these *stotrās*. The other important feature of this book is that all the *stotrās* are in *devanāgarī lipi*. I've often had access to a large number of *stotrās*, but in Tamil script. I find the *devanāgarī lipi* more conducive to correct pronunciation. There are several simple *shlokās* in this book, which I am sure children would be able to pick up easily. *Stotrās* such as *Nāma Rāmāyanam* should certainly be taught to children. Many of these stotras have been rendered wonderfully by *Śrīmatī M. S. Subbulakshmi*; one just needs to listen to her for both *bhakti* and inspiration. While the foremost importance is to be given to *bhakti*, one must certainly give importance to accurate pronunciation as well, and *MSS* is exemplary in that regard.

One should make it a point to chant at least few of these every day, and most of these in a month. One should certainly recite the *Vishnu Sahasranāmam* everyday. Of course, it must be emphasised that one's *nityakarmā* takes precedence over all these (सन्ध्याहीनः अशुचिः नित्यमनर्हहः सर्वकर्मसु)

and one must make time for *sandhyāvandanādi nityakarmās* and such prayers everyday:

विप्रो वृक्षस्तस्य मूलं च सन्ध्या वेदाः शाखा धर्मकर्माणि पत्रम् ।
तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव शाखा न पत्रम् ॥

In *Kaliyuga*, foremost importance is given to *nāmasankīrtanam*, and hence, stotras such as these should be recited with *bhakti*, regularly:

ध्यायन् कृते यजन् यज्ञैः त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

There are several people whom I must thank for their contributions to this book. I cannot undermine the importance of the Sanskrit Documents Website[1], which happens to be the source for almost all of the texts contained in here. Many thanks to volunteers to build and present such a wonderful collection online.

I must acknowledge the efforts of my friend *Prasād*, who has been instrumental (and almost wholly responsible) for the improved formatting in this book. I consulted him several times for help with XeLaTeX. But for his TeX macros, some of the alignments would have never happened! I must also thank the writers of the software ITranslator[2], which has been the hammer-and-nail for compiling this book. The other tool critical for this book was XeLaTeX, and it was indeed the release of MiKTeX 2.7 that led me to experiment with XeLaTeX, which I think has been a success.

I take this opportunity to seek the blessings of my *appā*, *ammā*, my *guru Shri S. Ananthakrishnan*, and my *māmā*, who have inspired me and taught me all that I know. I must definitely thank *Sāketh* too, who has been inspirational in several ways.

I must specially thank my *ammā*, who has encouraged and inspired me a lot through the course of compiling this book. I also must thank her for proof-reading the text, and particularly helping with *Śyāmalā dandakam*. Thanks are also due to my wife, for her support and encouragement throughout.

---

[1] http://sanskritdocuments.org/

[2] http://www.omkarananda-ashram.org/Sanskrit/Itranslt.html

Although we have put in efforts to remove any typographical errors in this book, I must emphasise that the errors in this book are solely due to my ignorance and I would be glad to rectify them. Please drop me a *gmail* at *karthik.raman* to notify me of even the smallest of errors.

यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥

This book is dedicated to Śrī Krishna.

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

— श्रीमद्भगवद्गीता ९-२७

सर्वम् श्री कृष्णार्पणमस्तु॥

May 16, 2008 Karthik Raman

॥ ॐ श्री गणेशाय नमः ॥
॥ ॐ श्री गुरुभ्यो नमः ॥
॥ हरिः ॐ ॥

# Preface (Second edition)

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

It is with great pleasure that I present the *second* edition of this book. The major changes have been the inclusion of some large *stotrās* such as the *Saundarya laharī*, *Sankshepa Rāmāyanam* and *Shiva sahasranāmam*, as well as numerous smaller *stotrās*. The *stotrās* have also now been segregated into two parts, with the longer *stotrās* occupying the second part of the book.

I thank all those who have made use of the previous edition of the book and have given me their feedback, which I hope has helped improve the content in the present edition. I thank my father-in-law, *Shri. N. Venugopālan*, for sending me the text of some rare *stotrās*. I also thank my wife *Mādhuryā*, for meticulously proof-reading *Saundarya laharī*. I also thank my *Ammā*, for suggesting the wonderful *Durgā pancharatnam*, composed by Mahaperival.

I welcome suggestions for improvements — please drop me a *gmail* at *karthik.raman* to notify me of any comments/suggestions and even the smallest of errors.

सर्वम् श्री कृष्णार्पणमस्तु॥

September 27, 2010 Karthik Raman

॥ ॐ श्री गणेशाय नमः ॥

॥ ॐ श्री गुरुभ्यो नमः ॥

॥ हरिः ॐ ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदन्तं भक्तानाम् एकदन्तमुपास्महे ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात् परं ब्रह्म तस्मै श्री गुरवे नमः ॥

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

श्रुतिस्मृतिपुराणानाम् आलयं करुणालयम् ।
नमामि भगवत्पादं शङ्करं लोकशङ्करम् ॥



# ॥ विघ्नेश्वर प्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदन्तं भक्तानाम् एकदन्तमुपास्महे ॥

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥

यं ब्रह्म वेदान्तविदो वदन्ति परे प्रधानं पुरुषं तथान्ये।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनायकाय॥

गजाननं भूतगणादिसेवितं कपित्थ-जम्बूफल-सार-भक्षितम् ।
उमासुतं शोकविनाशकारणं नमामि विघ्नेश्वरपादपङ्कजम् ॥

मूषकवाहन मोदकहस्त चामरकर्ण विलम्बितसूत्र।
वामनरूप महेश्वरपुत्र विघ्नविनायक पाद नमस्ते ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ॥

धूमकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।
वक्रतुण्डः शूर्पकर्णो हेरम्भः स्कन्दपूर्वजः ॥

षोडशैतानि नामानि यः पठेत् श्रृणुयादपि
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते॥

## ॥ सरस्वती प्रार्थना ॥

सरस्वती नमस्तुभ्यं वरदे कामरूपिणी।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा॥

पद्मपत्रविशालाक्षी पद्मकेसरवर्णिनी।
नित्यं पद्मालया देवी सा मां पातु सरस्वती॥

या कुन्देन्दु तुषारहारधवळा या शुभ्रवस्त्रावृता
या वीणा वरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

दोर्भिर्युक्ता चतुर्भिं स्फटिकमणिनिभैरक्षमालान्दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना॥



## ॥ चिरञ्जीविस्तोत्रम् ॥

अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः
कृपः परशुरामश्च सप्तैते चिरञ्जीविनः।
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम्
जीवेद्वर्षशतं प्राज्ञ अपमृत्युविवर्जितः॥

## ॥ पञ्चकन्यास्मरणम् ॥

अहल्या द्रौपदी सीता तारा मन्दोदरी तथा।
पञ्चकन्याः स्मरेन्नित्यं महापातकनाशनम् ॥



# ॥ महागणेशपञ्चरत्नम् ॥

मुदाकरात्तमोदकं सदाविमुक्तिसाधकम्
कलाधरावतंसकं विलासिलोकरक्षकम् ।
अनायकैकनायकं विनाशितेभदैत्यकम्
नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १ ॥

नतेतरातिभीकरं नवोदितार्कभास्वरम्
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरम्
महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २ ॥

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरम्
दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करम्
मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३ ॥

अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनम्
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणम्
कपोलदानवारणं भजे पुराणवारणम् ॥ ४ ॥

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजम्
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनाम्
तमेकदन्तमेव तं विचिन्तयामि सन्ततम् ॥ ५ ॥

महागणेशपञ्चरत्नमादरेण योऽन्वहम्
प्रजल्पति प्रभातके हृदि स्मरन् गणेश्वरम् ।
अरोगतामदोषतां सुसाहितीं सुपुत्रताम्
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्रीमहागणेशपञ्चरत्नं सम्पूर्णम् ॥

## ॥ गणाष्टकम् ॥

एकदन्तं महाकायं तप्तकाञ्चनसन्निभम् ।
लम्बोदरं विशालाक्षं वन्देऽहं गणनायकम् ॥ १ ॥

मौञ्जीकृष्णाजिनधरं नागयज्ञोपवीतिनम् ।
बालेन्दुशकलं मौळौ वन्देऽहं गणनायकम् ॥ २ ॥

चित्ररत्न-विचित्राङ्ग-चित्रमालाविभूषितम् ।
कामरूपधरं देवं वन्देऽहं गणनायकम् ॥ ३ ॥

मूषकोत्तमम् आरुह्य देवासुरमहाहवे ।
योद्धुकामं महावीर्यं वन्देऽहं गणनायकम् ॥ ४ ॥

गजवक्त्रं सुरश्रेष्ठं कर्णचामरभूषितम् ।
पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् ॥ ५ ॥

यक्षकिन्नर-गन्धर्व-सिद्ध-विद्याधरैस्सदा ।
स्तूयमानं महाबाहुं वन्देऽहं गणनायकम् ॥ ६ ॥

अम्बिकाहृदयानन्दं मातृभिः परिवेष्टितम् ।
भक्तप्रियं मदोन्मत्तं वन्देऽहं गणनायकम् ॥ ७ ॥

सर्वविघ्नकरं देवं सर्वविघ्नविवर्जितम् ।
सर्वसिद्धिप्रदातारं वन्देऽहं गणनायकम् ॥८॥

गणाष्टकमिदं पुण्यं यः पठेत् सततं नरः।
सिद्ध्यन्ति सर्वकार्याणि विद्यावान् धनवान् भवेत् ॥

## ॥ गणेशभुजङ्गम् ॥

रणत् क्षुद्रघण्टानिनादाभिरामम्
चलत् ताण्डवोद्दण्डवत्पद्मतालम् ।
लसत् तुन्दिलाङ्गोपरिव्यालहारम्
गणाधीशमीशानसूनुं तमीडे ॥ १ ॥

ध्वनिध्वंसवीणालयोल्लासिवक्त्रम्
स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् ।
गलद्दर्पसौगन्ध्यलोलालिमालम्
गणाधीशमीशानसूनुं तमीडे ॥ २ ॥

प्रकाशज्जपारक्तरन्तप्रसून-
प्रवालप्रभातारुणज्योतिरेकम् ।
प्रलम्बोदरं वक्रतुण्डैकदन्तम्
गणाधीशमीशानसूनुं तमीडे ॥ ३ ॥

विचित्रस्फुरद्रत्नमालाकिरीटम्
किरीटोल्लसच्चन्द्ररेखाविभूषम् ।
विभूषैकभूषं भवध्वंसहेतुम्
गणाधीशमीशानसूनुं तमीडे ॥ ४ ॥

उदञ्चद्भुजावल्लरीदृश्यमूलोच्-
चलद्-भ्रूलता-विभ्रमभ्राजदक्षम् ।
मरुत् सुन्दरीचामरैः सेव्यमानम्
गणाधीशमीशानसूनुं तमीडे ॥ ५ ॥

स्फुरन्निष्ठुरालोलपिङ्गाक्षितारम्
कृपाकोमलोदारलीलावतारम् ।
कलाबिन्दुगं गीयते योगिवर्यैर्-
गणाधीशमीशानसूनुं तमीडे ॥ ६ ॥

यमेकाक्षरं निर्मलं निर्विकल्पम्
गुणातीतमानन्दमाकारशून्यम् ।
परं पारमोङ्कारमान्मायगर्भम्
वदन्ति प्रगल्भं पुराणं तमीडे ॥ ७ ॥

चिदानन्दसान्द्राय शान्ताय तुभ्यम्
नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।
नमोऽनन्तलीलाय कैवल्यभासे
नमो विश्वबीज प्रसीदेशसूनो ॥ ८ ॥

इमं सुस्तवं प्रातरुत्थाय भक्त्या
पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् ।
गणेशप्रसादेन सिध्यन्ति वाचो
गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९ ॥



# ॥ गणपतिस्तवः ॥

ऋषिरुवाच

अजं निर्विकल्पं निराकारमेकम्
निरानन्दमानन्दमद्वैतपूर्णम् ।
परं निर्गुणं निर्विशेषं निरीहम्
परब्रह्मरूपं गणेशं भजेम ॥ १ ॥

गुणातीतमानं चिदानन्दरूपम्
चिदाभासकं सर्वगं ज्ञानगम्यम् ।
मुनिध्येयमाकाशरूपं परेशम्
परब्रह्मरूपं गणेशं भजेम ॥ २ ॥

जगत्कारणं कारणज्ञानरूपम्
सुरादिं सुखादिं गुणेशं गणेशम् ।
जगद्व्यापिनं विश्ववन्द्यं सुरेशम्
परब्रह्मरूपं गणेशं भजेम ॥ ३ ॥

रजोयोगतो ब्रह्मरूपं श्रुतिज्ञम्
सदा कार्यसक्तं हृदाऽचिन्त्यरूपम् ।
जगत्कारणं सर्वविद्यानिदानम्
परब्रह्मरूपं गणेशं नताः स्मः ॥ ४ ॥

सदा सत्ययोग्यं मुदा क्रीडमान
सुरारीन् हरन्तं जगत्पालयन्तम् ।
अनेकावतारं निजज्ञानहारम्
सदा विश्वरूपं गणेशं नमामः ॥ ५ ॥

तमोयोगिनं रुद्ररूपं त्रिनेत्रम्
जगद्धारकं तारकं ज्ञानहेतुम् ।
अनेकागमैः स्वं जनं बोधयन्त
सदा सर्वरूपं गणेशं नमामः ॥ ६ ॥

तमस्स्तोमहारं जनाज्ञानहारम्
त्रयीवेदसारं परब्रह्मसारम् ।
मुनिज्ञानकारं विदूरे विकारम्
सदा ब्रह्मरूपं गणेशं नमामः ॥ ७ ॥

निजैरोषधीस्तर्पयन्तं कराद्यैः
सुरौघान्कलाभिः सुधास्राविणीभिः ।
दिनेशांशुसन्तापहारं द्विजेशम्
शशाङ्कस्वरूपं गणेशं नमामः ॥ ८ ॥

प्रकाशस्वरूपं नभो वायुरूपम्
विकारादिहेतुं कलाधाररूपम् ।
अनेकक्रियानेकशक्तिस्वरूपम्
सदा शक्तिरूपं गणेशं नमामः ॥ ९ ॥

प्रधानस्वरूपं महत्तत्वरूपम्
धराचारिरूपं दिगीशादिरूपम् ।
असत्सत्स्वरूपं जगद्धेतुरूपम्
सदा विश्वरूपं गणेशं नताः स्मः ॥ १० ॥

त्वदीये मनः स्थापयेदङ्घ्रियुग्मे
जनो विघ्नसङ्घातपीडां लभेत।
लसत्सूर्यबिम्बे विशाले स्थितोऽयम्
जनो ध्वान्तपीडां कथं वा लभेत॥ ११॥

वयं भ्रामिताः सर्वथाऽज्ञानयोगा-
दलब्धास्तवाङ्घ्रिं बहून् वर्षपूगान्।
इदानीमवाप्तास्तवैव प्रसादात्
प्रपन्नान् सदा पाहि विश्वम्भराद्य॥ १२॥

एवं स्तुतो गणेशस्तु सन्तुष्टोऽभून्महामुने।
कृपया परयोपेतोऽभिधातुमुपचक्रमे॥ १३॥

॥ इति श्रीमद्-गर्गऋषिकृतो गणपतिस्तवः सम्पूर्णः॥



# ॥ वेङ्कटेश सुप्रभातम् ॥

कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ १ ॥

उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ॥ २ ॥

मातस्समस्तजगतां मधुकैटभारेः
वक्षोविहारिणि मनोहरदिव्यमूर्ते।
श्रीस्वामिनि श्रितजनप्रियदानशीले
श्रीवेङ्कटेशदयिते तव सुप्रभातम् ॥ ३ ॥

तव सुप्रभातमरविन्दलोचने
भवतु प्रसन्नमुखचन्द्रमण्डले।
विधिशङ्करेन्द्रवनिताभिरर्चिते
वृषशैलनाथदयिते दयानिधे ॥ ४ ॥

अत्र्यादिसप्तऋषयस्समुपास्य सन्ध्याम्
आकाशसिन्धुकमलानि मनोहराणि।
आदाय पादयुगमर्चयितुं प्रपन्नाः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ५ ॥

पञ्चाननाब्जभवषण्मुखवासवाद्याः
त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति।
भाषापतिः पठति वासरशुद्धिमारात्
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ६ ॥

ईषत्प्रफुल्ल-सरसीरुह-नारिकेल-
पूगद्रुमादि-सुमनोहरपालिकानाम् ।
आवाति मन्दमनिलस्सह दिव्यगन्धैः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥७॥

उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः
पात्रावशिष्टकदलीफलपायसानि ।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥८॥

तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या
गायत्यनन्तचरितं तव नारदोऽपि।
भाषासमग्रमसकृत्करचाररम्यम्
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥९॥

भृङ्गावली च मकरन्दरसानुविद्ध-
झङ्कारगीत निनदैः सह सेवनाय।
निर्यात्युपान्तसरसीकमलोदरेभ्यः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥१०॥

योषागणेन वरदध्निविमथ्यमाने
घोषालयेषु दधिमन्थनतीव्रघोषाः।
रोषात्कलिं विदधते ककुभश्च कुम्भाः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥११॥

पद्मेशमित्रशतपत्रगतालिवर्गाः
हर्तुं श्रियं कुवलयस्य निजाङ्गलक्ष्म्या।
भेरीनिनादमिव बिभ्रति तीव्रनादम्
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥१२॥

श्रीमन्नभीष्टवरदाखिललोकबन्धो
श्रीश्रीनिवास जगदेकदयैकसिन्धो।
श्रीदेवतागृहभुजान्तरदिव्यमूर्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१३॥

श्रीस्वामिपुष्करिणिकाऽऽप्लवनिर्मलाङ्गाः
श्रेयोऽर्थिनो हरविरिञ्चिसनन्दनाद्याः।
द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१४॥

श्रीशेषशैल-गरुडाचल-वेङ्कटाद्रि-
नारायणाद्रि-वृषभाद्रि-वृषाद्रि-मुख्याम् ।
आख्यां त्वदीय वसतेरनिशं वदन्ति
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१५॥

सेवापराः शिव-सुरेश-कृशानु-धर्म-
रक्षोऽम्बुनाथ-पवमान-धनाधिनाथाः।
बद्धाञ्जलि-प्रविलसन्निजशीर्ष-देशाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१६॥

धाटीषु ते विहगराज-मृगाधिराज-
नागाधिराज-गजराज-हयाधिराजाः।
स्वस्वाधिकार-महिमाऽधिकमर्थयन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१७॥

सूर्येन्दु-भौम-बुध-वाक्पति-काव्यसौरि-
स्वर्भानुकेतुदिविषत्परिषत्प्रधानाः।
त्वद्दास-दास-चरमावधि-दासदासाः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१८॥

त्वत् पादधूलिभरितस्फुरितोत्तमाङ्गाः
स्वर्गापवर्गनिरपेक्ष-निजान्तरङ्गाः।
कल्पागमाऽऽकलनयाऽऽकुलतां लभन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥१९॥

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः
स्वर्गापवर्गपदवीं परमां श्रयन्तः।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२०॥

श्रीभूमिनायक दयादिगुणामृताब्धे
देवाधिदेव जगदेकशरण्यमूर्ते।
श्रीमन्ननन्त गरुडादिभिरर्चिताङ्घ्रे
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२१॥

श्रीपद्मनाभ पुरुषोत्तम वासुदेव
वैकुण्ठ माधव जनार्दन चक्रपाणे।
श्रीवत्सचिह्न शरणागत-पारिजात
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२२॥

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते
कान्ताकुचाम्बुरुह-कुड्मल-लोलदृष्टे।
कल्याणनिर्मलगुणाकर दिव्यकीर्ते
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२३॥

मीनाकृते कमठ कोल नृसिंह वर्णिन्
स्वामिन् परश्वथ तपोधन रामचन्द्र।
शेषांशराम यदुनन्दन कल्किरूप
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२४॥

एला-लवङ्ग-घनसार-सुगन्धि-तीर्थम्
दिव्यं वियत्सरिति हेमघटेषु पूर्णम् ।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः
तिष्ठन्ति वेङ्कटपते तव सुप्रभातम् ॥२५॥

भास्वानुदेति विकचानि सरोरुहाणि
सम्पूरयन्ति निनदैः ककुभो विहङ्गाः।
श्रीवैष्णवास्सततमर्थित-मङ्गलास्ते
धामाऽऽश्रयन्ति तव वेङ्कट सुप्रभातम् ॥२६॥

ब्रह्मादयः सुरवरास्समहर्षयस्ते
सन्तस्सनन्दन मुखास्तव योगिवर्याः।
धामान्तिके तव हि मङ्गलवस्तुहस्ताः
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२७॥

लक्ष्मीनिवास निरवद्यगुणैकसिन्धो
संसार-सागर-समुत्तरणैकसेतो ।
वेदान्तवेद्य निजवैभव भक्तभोग्य
श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥२८॥

इत्थं वृषाचलपतेरिह सुप्रभातम्
ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः।
तेषां प्रभातसमये स्मृतिरङ्गभाजाम्
प्रज्ञां परार्थसुलभां परमां प्रसूते॥२९॥

॥इति श्रीवेङ्कटेश सुप्रभातम्॥

## ॥वेङ्कटेश स्तोत्रम्॥

कमलाकुच-चूचुक-कुङ्कुमतो नियतारुणितातुल-नीलतनो।
कमलायतलोचन लोकपते विजयी भव वेङ्कटशैलपते॥१॥

सचतुर्मुख-षण्मुख-पञ्चमुख-प्रमुखाखिलदैवतमौलिमणे।
शरणागतवत्सल सारनिधे परिपालय मां वृषशैलपते॥२॥

अतिवेलतया तव दुर्विषहैरनुवेलकृतैरपराधशतैः।
भरितं त्वरितं वृषशैलपते परया कृपया परिपाहि हरे॥३॥

अधिवेङ्कटशैलमुदारमते जनताभिमताधिकदानरतात् ।
परदेवतया गदितान्निगमैः कमलादयितान्न परं कलये ॥४॥

कलवेणुरवावशगोपवधू शतकोटिवृतात्स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात्सुखदात् वसुदेवसुतान्न परं कलये ॥५॥

अभिरामगुणाकर दाशरथे जगदेकधनुर्धर धीरमते।
रघुनायक राम रमेश विभो वरदो भव देव दयाजलधे ॥६॥

अवनीतनया कमनीयकरं रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहिरं महनीयमहं रघुराम मये ॥७॥

सुमुखं सुहृदं सुलभं सुखदं स्वनुजं च सुखायममोघशरम् ।
अपहाय रघूद्वहमन्यमहं न कथञ्चन कञ्चन जातु भजे ॥८॥

विना वेङ्कटेशं न नाथो न नाथः
सदा वेङ्कटेशं स्मरामि स्मरामि।
हरे वेङ्कटेश प्रसीद प्रसीद
प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥९॥

अहं दूरतस्ते पदाम्भोजयुग्म
प्रणामेच्छयाऽऽगत्य सेवां करोमि।
सकृत्सेवया नित्यसेवाफलं त्वम्
प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश ॥१०॥

अज्ञानिना मया दोषानशेषान् विहितान् हरे।
क्षमस्व त्वं क्षमस्व त्वं शेषशैल-शिखामणे ॥११॥

॥इति श्रीवेङ्कटेश स्तोत्रं सम्पूर्णम्॥

# ॥ वेङ्कटेश प्रपत्तिः ॥

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीम्
तद्वक्षस्स्थल-नित्य-वासरसिकां तत्क्षान्ति संवर्धिनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियम्
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥१॥

श्रीमन् कृपाजलनिधे कृतसर्वलोक
सर्वज्ञ शक्त नतवत्सल सर्वशेषिन् ।
स्वामिन् सुशील सुलभाश्रितपारिजात
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥२॥

आनूपुरार्पितसुजातसुगन्धिपुष्प-
सौरभ्यसौरभकरौ समसन्निवेशौ।
सौम्यौ सदाऽनुभवनेऽपि नवानुभाव्यौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥३॥

सद्योविकासिसमुदित्वरसान्द्रराग-
सौरभ्यनिर्भरसरोरुहसाम्यवार्ताम् ।
सम्यक्षु साहसपदेषु विलेखयन्तौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥४॥

रेखामयध्वजसुधाकलशातपत्र-
वज्राङ्कुशाम्बुरुहकल्पकशङ्खचक्रैः।
भव्यैरलङ्कृततलौ परतत्वचिह्नैः
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥५॥

ताम्रोदरद्युतिपराजितपद्मरागौ
बाह्यैर्महोभिरभिभूतमहेन्द्रनीलौ।
उद्यन्नखांशुभिरुदस्तशशाङ्कभासौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ६ ॥

सप्रेमभीति कमलाकरपल्लवाभ्याम्
संवाहनेऽपि सपदि क्लममादधानौ।
कान्तावावाङ्ग्मन-सगोचर-सौकुमार्यौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ७ ॥

लक्ष्मीमहीतदनुरूपनिजानुभाव-
नीलादिदिव्यमहिषीकरपल्लवानाम् ।
आरुण्यसङ्क्रमणतः किल सान्द्ररागौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ८ ॥

नित्यानमद्विधिशिवादिकिरीटकोटि-
प्रत्युप्त-दीप्त-नवरत्न-महःप्ररोहैः।
नीराजनाविधिमुदारमुपाददानौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ९ ॥

विष्णोः पदे परम इत्युतिदप्रशंसौ
यौ मध्व उत्स इति भोग्यतयाऽप्युपात्तौ।
भूयस्तथेति तव पाणितलप्रदिष्टौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १० ॥

पार्थाय तत्सदृश-सारथिना त्वयैव
यौ दर्शितौ स्वचरणौ शरणं व्रजेति।
भूयोऽपि मह्यमिह तौ करदर्शितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये॥ ११॥

मन्मूर्ध्नि कालियफणे विकटाटवीषु
श्रीवेङ्कटाद्रिशिखरे शिरसि श्रुतीनाम् ।
चित्तेऽप्यनन्यमनसां सममाहितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये॥ १२॥

अम्लानहृष्यदवनीतलकीर्णपुष्पौ
श्रीवेङ्कटाद्रि-शिखराभरणायमानौ।
आनन्दिताखिल-मनो-नयनौ तवैतौ
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये॥ १३॥

प्रायः प्रपन्न-जनता-प्रथमावगाह्यौ
मातुस्स्तनाविव शिशोरमृतायमानौ।
प्राप्तौ परस्परतुलामतुलान्तरौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये॥ १४॥

सत्वोत्तरैस्सतत-सेव्यपदाम्बुजेन
संसार-तारक-दयार्द्र-दृगञ्चलेन।
सौम्यौ पयन्तृमुनिना मम दर्शितौ ते
श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये॥ १५॥

श्रीश श्रिया घटिकया त्वदुपायभावे
प्राप्ये त्वयि स्वयमुपेयतया स्फुरन्त्या।
नित्याश्रिताय निरवद्यगुणाय तुभ्यम्
स्यां किङ्करो वृषगिरीश न जातु मह्यम् ॥१६॥

॥ इति श्रीवेङ्कटेश प्रपत्तिः सम्पूर्णः ॥

## ॥ वेङ्कटेश मङ्गलाशासनम् ॥

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥१॥

लक्ष्मी-सविभ्रमालोक-सुभ्रू-विभ्रमचक्षुषे।
चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ॥२॥

श्रीवेङ्कटाद्रि-शृङ्गाग्र-मङ्गलाभरणाङ्घ्रये ।
मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ॥३॥

सर्वावयवसौन्दर्य-सम्पदा सर्वचेतसाम् ।
सदा सम्मोहनायास्तु वेङ्कटेशाय मङ्गलम् ॥४॥

नित्याय निरवद्याय सत्यानन्दचिदात्मने।
सर्वान्तरात्मने श्रीमद्-वेङ्कटेशाय मङ्गलम् ॥५॥

स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे।
सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ॥६॥

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने।
प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ॥७॥

आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम् ।
अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम् ॥८॥

प्रायः स्वचरणौ पुंसां शरण्यत्वेन पाणिना।
कृपयाऽऽदिशते श्रीमद्-वेङ्कटेशाय मङ्गलम् ॥९॥

दयामृत-तरङ्गिण्यास्तरङ्गैरिव शीतलैः।
अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम् ॥१०॥

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये।
सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम् ॥११॥

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे।
रमया रममाणाय वेङ्कटेशाय मङ्गलम् ॥१२॥

श्रीमत् सुन्दरजामातृमुनिमानसवासिने।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥१३॥

मङ्गलाशासनपरैर्मदाचार्य-पुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥१४॥

॥इति श्रीवेङ्कटेश मङ्गलाशासनं सम्पूर्णम्॥

## ॥वेङ्कटेश करावलम्बस्तोत्रम्॥

श्रीशेषशैल सुनिकेतन दिव्यमूर्ते
नारायणाच्युत हरे नलिनायताक्ष।
लीलाकटाक्ष-परिरक्षित-सर्वलोक
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥१॥

ब्रह्मादिवन्दितपदाम्बुज शङ्खपाणे
श्रीमत्सुदर्शन-सुशोभित-दिव्यहस्त।
कारुण्यसागर शरण्य सुपुण्यमूर्ते
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥२॥

वेदान्त-वेद्य भवसागर-कर्णधार
श्रीपद्मनाभ कमलार्चितपादपद्म।
लोकैक-पावन परात्पर पापहारिन्
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥३॥

लक्ष्मीपते निगमलक्ष्य निजस्वरूप
कामादिदोष-परिहारक बोधदायिन् ।
दैत्यादिमर्दन जनार्दन वासुदेव
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥४॥

तापत्रयं हर विभो रभसा मुरारे
संरक्ष मां करुणया सरसीरुहाक्ष।
मच्छिष्य इत्यनुदिनं परिरक्ष विष्णो
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥५॥

श्री जातरूपनवरत्न-लसत्किरीट
कस्तूरिकातिलकशोभिललाटदेश ।
राकेन्दुबिम्ब-वदनाम्बुज वारिजाक्ष
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥६॥

वन्दारुलोक-वरदान-वचोविलास
रत्नाढ्यहार-परिशोभित-कम्बुकण्ठ।
केयूररत्न-सुविभासि-दिगन्तराल
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥७॥

दिव्याङ्गदाङ्कित-भुजद्वय मङ्गलात्मन्
केयूरभूषण-सुशोभित-दीर्घबाहो ।
नागेन्द्र-कङ्कण-करद्वय कामदायिन्
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥८॥

स्वामिन् जगद्धरणवारिधिमध्यमग्नम्
मामुद्धराद्य कृपया करुणापयोधे।
लक्ष्मींश्च देहि मम धर्म-समृद्धिहेतुम्
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥९॥

दिव्याङ्गरागपरिचर्चित-कोमलाङ्ग
पीताम्बरावृततनो तरुणार्क-दीप्ते।
सत्काञ्चनाभ-परिधान-सुपट्टबन्ध
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥१०॥

रत्नाढ्यदाम-सुनिबद्ध-कटि-प्रदेश
माणिक्यदर्पण-सुसन्निभ-जानुदेश ।
जङ्घाद्वयेन परिमोहित सर्वलोक
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥११॥

लोकैकपावन-सरित्परिशोभिताङ्के
त्वत्पाददर्शन दिने च ममाघमीश।
हार्दं तमश्च सकलं लयमाप भूमन्
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ १२॥

कामादि-वैरि-निवहोच्चुत मे प्रयातः
दारिद्र्यमप्यपगतं सकलं दयालो।
दीनं च मां समवलोक्य दयार्द्र-दृष्ट्या
श्रीवेङ्कटेश मम देहि करावलम्बम् ॥ १३॥

श्रीवेङ्कटेश-पदपङ्कज-षट्पदेन
श्रीमन्नृसिंहयतिना रचितं जगत्याम् ।
ये तत्पठन्ति मनुजाः पुरुषोत्तमस्य
ते प्राप्नुवन्ति परमां पदवीं मुरारेः ॥ १४॥

॥ इति श्री शृङ्गेरि-जगद्गुरुणा श्री नृसिंहभारती-स्वामिना रचितं श्री वेङ्कटेशकरावलम्बस्तोत्रं सम्पूर्णम् ॥

## ॥ वेङ्कटेश स्तोत्रम् (वेङ्कटगिरिमाहात्म्ये) ॥

वेङ्कटेशो वासुदेवः प्रद्युम्नोऽमितविक्रमः।
सङ्कर्षणोऽनिरुद्धश्च शेषाद्रिपतिरेव च ॥ १ ॥

जनार्दनः पद्मनाभो वेङ्कटाचलवासनः।
सृष्टिकर्ता जगन्नाथो माधवो भक्तवत्सलः ॥ २ ॥

गोविन्दो गोपतिः कृष्णः केशवो गरुडध्वजः।
वराहो वामनश्चैव नारायण अधोक्षजः ॥ ३ ॥

श्रीधरः पुण्डरीकाक्षः सर्वदेवस्तुतो हरिः।
श्रीनृसिंहो महासिंहः सूत्राकारः पुरातनः॥४॥

रमानाथो महीभर्ता भूधरः पुरुषोत्तमः।
चोळपुत्रप्रियः शान्तो ब्रह्मादीनां वरप्रदः॥५॥

श्रीनिधिः सर्वभूतानां भयकृत् भयनाशनः।
श्रीरामो रामभद्रश्च भवबन्धैकमोचकः॥६॥

भूतवासो गिरिवासः श्रीनिवासः श्रियः पतिः।
अच्युतानन्त गोविन्दो विष्णुर्वेङ्कटनायकः॥७॥

सर्वदेवैकशरणं सर्वदेवैकदैवतम्।
समस्तदेवकवचं सर्वदेवशिखामणिः॥८॥

इतीदं कीर्तितं यस्य विष्णोरमिततेजसः।
त्रिकाले यः पठेन्नित्यं पापं तस्य न विद्यते॥९॥

राजद्वारे पठेत्घोरे सङ्ग्रामे रिपुसङ्कटे।
भूतसर्पपिशाचादिभयं नास्ति कदाचन॥१०॥

अपुत्रो लभते पुत्रान् निर्धनो धनवान् भवेत्।
रोगार्तो मुच्यते रोगाद्बद्धो मुचेत बन्धनात्॥११॥

यद्यदिष्टतमं लोके तत्तत्प्राप्नोत्यसंशयः।
ऐश्वर्यं राजसम्मानं भुक्तिमुक्तिफलप्रदम्॥१२॥

विष्णोर्लोकैकसोपानं सर्वदुःखैकनाशनम्।
सर्वैश्वर्यप्रदं नृणां सर्वमङ्गळकारकम्॥१३॥

मायावि परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम्।
स्वामिपुष्करिणीतीरे रमया सह मोदते॥१४॥

कल्याणाद्भुतगात्राय कामितार्थप्रदायिने।
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय मङ्गळम् ॥ १५॥

॥ इति श्रीब्रह्माण्डपुराणे ब्रह्मनारदसंवादे
वेङ्कटगिरिमाहात्म्ये श्रीमद्वेङ्कटेशस्तोत्रं सम्पूर्णम् ॥



# ॥ नामरामायणम् ॥

## ॥ बालकाण्डः ॥

शुद्धब्रह्मपरात्पर राम
कालात्मकपरमेश्वर राम
शेषतल्पसुखनिद्रित राम
ब्रह्माद्यमरप्रार्थित राम
चण्डकिरणकुलमण्डन राम
श्रीमद्दशरथनन्दन राम
कौसल्यासुखवर्धन राम
विश्वामित्रप्रियधन राम
घोरताटकाघातक राम
मारीचादिनिपातक राम
कौशिकमखसंरक्षक राम
श्रीमदहल्योद्धारक राम
गौतममुनिसम्पूजित राम
सुरमुनिवरगणसंस्तुत राम
नाविकधावितमृदुपद राम
मिथिलापुरजनमोहक राम
विदेहमानसरञ्जक राम
त्र्यम्बककार्मुखभञ्जक राम
सीतार्पितवरमालिक राम
कृतवैवाहिककौतुक राम
भार्गवदर्पविनाशक राम
श्रीमदयोध्यापालक राम

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ अयोध्याकाण्डः ॥

अगणितगुणगणभूषित राम
अवनीतनयाकामित राम
राकाचन्द्रसमानन राम
पितृवाक्याश्रितकानन राम
प्रियगुहविनिवेदितपद राम
तत्क्षालितनिजमृदुपद राम
भरद्वाजमुखानन्दक राम
चित्रकूटाद्रिनिकेतन राम
दशरथसन्ततचिन्तित राम
कैकेयीतनयार्थित राम
विरचितनिजपितृकर्मक राम
भरतार्पितनिजपादुक राम

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ अरण्यकाण्डः ॥

दण्डकावनजनपावन राम
दुष्टविराधविनाशन राम
शरभङ्गसुतीक्ष्णार्चित राम
अगस्त्यानुग्रहवर्धित राम
गृध्राधिपसंसेवित राम
पञ्चवटीतटसुस्थित राम
शूर्पणखार्त्तिविधायक राम
खरदूषणमुखसूदक राम

सीताप्रियहरिणानुग राम
मारीचार्तिकृताशुग राम
विनष्टसीतान्वेषक राम
गृध्राधिपगतिदायक राम
शबरीदत्तफलाशन राम
कबन्धबाहुच्छेदन राम

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ किष्किन्धाकाण्डः ॥

हनुमत्सेवितनिजपद राम
नतसुग्रीवाभीष्टद राम
गर्वितवालिसंहारक राम
वानरदूतप्रेषक राम
हितकरलक्ष्मणसंयुत राम

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ सुन्दरकाण्डः ॥

कपिवरसन्ततसंस्मृत राम
तद्गतिविघ्नध्वंसक राम
सीताप्राणाधारक राम
दुष्टदशाननदूषित राम
शिष्टहनूमद्भूषित राम
सीतावेदितकाकावन राम
कृतचूडामणिदर्शन राम
कपिवरवचनाश्वासित राम

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ युद्धकाण्डः ॥

रावणनिधनप्रस्थित राम
वानरसैन्यसमावृत राम
शोषितसरिदीशार्थित राम
विभीषणाभयदायक राम
पर्वतसेतुनिबन्धक राम
कुम्भकर्णशिरश्छेदक राम
राक्षससङ्घविमर्दक राम
अहिमहिरावणचारण राम
संहृतदशमुखरावण राम
विधिभवमुखसुरसंस्तुत राम
खःस्थितदशरथवीक्षित राम
सीतादर्शनमोदित राम
अभिषिक्तविभीषणनत राम
पुष्पकयानारोहण राम
भरद्वाजाभिनिषेवण राम
भरतप्राणप्रियकर राम
साकेतपुरीभूषण राम
सकलस्वीयसमानत राम
रत्नलसत्पीठास्थित राम
पट्टाभिषेकालङ्कृत राम
पार्थिवकुलसम्मानित राम
विभीषणार्पितरङ्गक राम
कीशकुलानुग्रहकर राम
सकलजीवसंरक्षक राम

| | |
|---|---|
| समस्तलोकाधारक | राम |

राम राम जय राजा राम।
राम राम जय सीता राम॥

## ॥ उत्तरकाण्डः ॥

| | |
|---|---|
| आगतमुनिगणसंस्तुत | राम |
| विश्रुतदशकण्ठोद्भव | राम |
| सितालिङ्गननिर्वृत | राम |
| नीतिसुरक्षितजनपद | राम |
| विपिनत्याजितजनकज | राम |
| कारितलवणासुरवध | राम |
| स्वर्गतशम्बुकसंस्तुत | राम |
| स्वतनयकुशलवनन्दित | राम |
| अश्वमेधक्रतुदीक्षित | राम |
| कालावेदितसुरपद | राम |
| आयोध्यकजनमुक्तिद | राम |
| विधिमुखविबुधानन्दक | राम |
| तेजोमयनिजरूपक | राम |
| संसृतिबन्धविमोचक | राम |
| धर्मस्थापनतत्पर | राम |
| भक्तिपरायणमुक्तिद | राम |
| सर्वचराचरपालक | राम |
| सर्वभवामयवारक | राम |
| वैकुण्ठालयसंस्थित | राम |
| नित्यानन्दपदस्थित | राम |

राम राम जय राजा राम।
राम राम जय सीता राम॥

॥ इति श्रीमन्नारदविरचितं नामरामायणं सम्पूर्णम्॥

# ॥ सीतारामस्तोत्रम्॥

अयोध्यापुरनेतारं मिथिलापुरनायिकाम् ।
राघवाणामलङ्कारं वैदेहानामलङ्क्रियाम् ॥१॥

रघूणां कुलदीपं च निमीनां कुलदीपिकाम् ।
सूर्यवंशसमुद्भूतं सोमवंशसमुद्भवाम् ॥२॥

पुत्रं दशरथस्याद्यं पुत्रीं जनकभूपतेः।
वसिष्ठानुमताचारं शतानन्दमतानुगाम् ॥३॥

कौसल्यागर्भसम्भूतं वेदिगर्भोदितां स्वयम् ।
पुण्डरीकविशालाक्षं स्फुरदिन्दीवरेक्षणाम् ॥४॥

चन्द्रकान्ताननाम्भोजं चन्द्रबिम्बोपमाननाम् ।
मत्तमातङ्गगमनं मत्तहंसवधूगताम् ॥५॥
चन्दनार्द्रभुजामध्यं कुङ्कुमार्द्रकुचस्थलीम् ।
चापालङ्कृतहस्ताब्जं पद्मालङ्कृतपाणिकाम् ॥६॥
शरणागतगोप्तारं प्रणिपातप्रसादिकाम् ।
कालमेघनिभं रामं कार्तस्वरसमप्रभाम् ॥७॥
दिव्यसिंहासनासीनं दिव्यस्रग्वस्त्रभूषणाम् ।
अनुक्षणं कटाक्षाभ्यां अन्योन्येक्षणकाङ्क्षिणौ ॥८॥
अन्योन्यसदृशाकारौ त्रैलोक्यगृहदम्पती ।
इमौ युवां प्रणम्याहं भजाम्यद्य कृतार्थताम् ॥९॥
अनेन स्तौति यत्स्तुत्यं रामं सीतां च भक्तितः ।
तस्य तौ तनुतां पुण्याः सम्पदः सकलार्थदाः ॥१०॥
एवं श्रीरामचन्द्रस्य जानक्याश्च विशेषतः ।
कृतं हनुमता पुण्यं स्तोत्रं सद्यो विमुक्तिदम् ॥११॥
यः पठेत् प्रातरुत्थाय सर्वान् कामानवाप्नुयात् ॥
॥इति श्री हनुमत्कृत-सीतारामस्तोत्रं सम्पूर्णम् ॥

## ॥एकश्लोकि रामायणम्॥

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनम्
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालीनिर्दलनं समुद्रतरणं लङ्कापुरीदाहनम्
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम् ॥

# ॥ रामरक्षास्तोत्रम् ॥

अस्य श्रीरामरक्षास्तोत्रमन्त्रस्य।
बुधकौशिक ऋषिः। श्रीसीतारामचन्द्रो देवता।
अनुष्टुप् छन्दः। सीता शक्तिः। श्रीमद्-हनुमान कीलकम्।
श्रीरामचन्द्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः॥

## ॥ ध्यानम् ॥

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थम्
पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढ-सीतामुखकमलमिलल्लोचनं नीरदाभम्
नानालङ्कारदीप्तं दधतमुरुजटामण्डनं रामचन्द्रम् ॥

चरितं रघुनाथस्य शतकोटि-प्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ॥

ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम्
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ।
सासितूणधनुर्बाणपाणिं नक्तञ्चरान्तकम्
स्वलीलया जगत्त्रातुम् आविर्भूतम् अजं विभुम् ॥

रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम्॥

## ॥ कवचम् ॥

शिरो मे राघवः पातु भालं दशरथात्मजः।
कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती॥ १ ॥

घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः।
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः॥२॥

स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः।
करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ॥३॥

मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः।
गुह्यं जितेन्द्रियः पातु पृष्ठः पातु रघूत्तमः॥४॥

वक्षः पातु कबन्धारिः स्तनौ गीर्वाणवन्दितः।
पार्श्वौ कुलपतिः पातु कुक्षिमिक्ष्वाकुनन्दनः॥५॥

सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ॥६॥

जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः॥७॥

एतां रामबलोपेतां रक्षां यः सुकृती पठेत् ।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥८॥

पातालभूतलव्योमचारिणश्छद्मचारिणः।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः॥९॥

रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति॥१०॥

जगज्जैत्रैकमन्त्रेण रामनाम्नाऽभिरक्षितम् ।
यः कण्ठे धारयेत्तस्य करस्थाः सर्वसिद्धयः॥११॥

वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमङ्गलम् ॥१२॥

आदिष्टवान् यथा स्वप्ने रामरक्षामिमां हरः।
तथा लिखितवान् प्रातः प्रबुद्धो बुधकौशिकः॥ १३॥

आरामः कल्पवृक्षाणां विरामः सकलापदाम् ।
अभिरामस्त्रिलोकानां रामः श्रीमान् स नः प्रभुः॥ १४॥

तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ॥ १५॥

फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ॥ १६॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।
रक्षः कुलनिहन्तारौ त्रायेतां नो रघूत्तमौ॥ १७॥

आत्तसज्जधनुषाविषुस्पृशौ अक्षयाशुगनिषङ्गसङ्गिनौ।
रक्षणाय मम रामलक्ष्मणौ अग्रतः पथि सदैव गच्छताम् ॥ १८॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा।
यच्छन्मनोरथोऽस्माकं रामः पातु सलक्ष्मणः॥ १९॥

रामो दाशरथिः शूरो लक्ष्मणानुचरो बली।
काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः॥ २०॥

वेदान्तवेद्यो यज्ञेशः पुराणपुरुषोत्तमः।
जानकीवल्लभः श्रीमान् अप्रमेयपराक्रमः॥ २१॥

इत्येतानि जपन्नित्यं मद्भक्तः श्रद्धयान्वितः।
अश्वमेधाधिकं पुण्यं सम्प्राप्नोति न संशयः॥ २२॥

॥ इति पद्मपुराणे वेदव्यासकृतौ भगवद्वसिष्ठ-श्रीबुधकौशिकप्रणीतं
वज्रपञ्जरं नाम श्रीरामकवचं सम्पूर्णम्॥

रामं दुर्वादलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो नरः ॥ १ ॥

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरम्
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिम्
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥ २ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ३ ॥

श्रीराम राम रघुनन्दन राम राम
श्रीराम राम भरताग्रज राम राम।
श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव राम राम ॥ ४ ॥

श्रीरामचन्द्रचरणौ मनसा स्मरामि
श्रीरामचन्द्रचरणौ वचसा गृह्णामि।
श्रीरामचन्द्रचरणौ शिरसा नमामि
श्रीरामचन्द्रचरणौ शरणं प्रपद्ये ॥ ५ ॥

माता रामो मत्पिता रामचन्द्रः
स्वामी रामो मत्सखा रामचन्द्रः।
सर्वस्वं मे रामचन्द्रो दयालुः
नान्यं जाने नैव जाने न जाने ॥ ६ ॥

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ ७ ॥

लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम् ।
कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये ॥८॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥९॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥१०॥

आपदाम् अपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥११॥

भर्जनं भवबीजानाम् अर्जनं सुखसम्पदाम् ।
तर्जनं यमदूतानां राम रामेति गर्जनम् ॥१२॥

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर॥१३॥

राम रामेति रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने॥१४॥

॥श्रीसीतारामचन्द्रार्पणमस्तु॥



मङ्गळम् कोसलेन्द्राय महनीयगुणाब्धये।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥

## ॥ रामभुजङ्गप्रयातस्तोत्रम् ॥

विशुद्धं परं सच्चिदानन्दरूपम्
गुणाधारमाधारहीनं वरेण्यम् ।
महान्तं विभान्तं गुहान्तं गुणान्तम्
सुखान्तं स्वयं धाम रामं प्रपद्ये ॥ १ ॥

शिवं नित्यमेकं विभुं तारकाख्यम्
सुखाकारमाकारशून्यं सुमान्यम् ।
महेशं कलेशं सुरेशं परेशम्
नरेशं निरीशं महीशं प्रपद्ये ॥ २ ॥

यदावर्णयत् कर्णमूलेऽन्तकाले
शिवो राम रामेति रामेति काश्याम् ।
तदेकं परं तारकब्रह्मरूपम्
भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥ ३ ॥

महारत्नपीठे शुभे कल्पमूले
सुखासीनमादित्यकोटिप्रकाशम् ।
सदा जानकीलक्ष्मणोपेतमेकम्
सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥ ४ ॥

क्वणद्रत्नमञ्जीरपादारविन्दम्
लसन्मेखलाचारुपीताम्बराढ्यम् ।
महारत्नहारोल्लसत् कौस्तुभाङ्गम्
नदच्चञ्चरीमञ्जरीलोलमालम् ॥ ५ ॥

लसच्चन्द्रिकास्मेरशोणाधराभम्
समुद्यत् पतङ्गेन्दुकोटिप्रकाशम् ।
नमद्ब्रह्मरुद्रादिकोटीररत्न-
स्फुरत् कान्तिनीराजनाराधिताङ्घ्रिम् ॥ ६ ॥

पुरः प्राञ्जलीनाञ्जनेयादिभक्तान्
स्वचिन्मुद्रया भद्रया बोधयन्तम् ।
भजेऽहं भजेऽहं सदा रामचन्द्रम्
त्वदन्यं न मन्ये न मन्ये न मन्ये ॥ ७ ॥

यदा मत्समीपं कृतान्तः समेत्य
प्रचण्डप्रतापैर्भटैर्भीषयेन्माम् ।
तदाऽऽविष्करोषि त्वदीयं स्वरूपम्
तदापत् प्रणाशं सकोदण्डबाणम् ॥ ८ ॥

निजे मानसे मन्दिरे सन्निधेहि
प्रसीद प्रसीद प्रभो रामचन्द्र ।
ससौमित्रिणा कैकेयीनन्दनेन
स्वशक्त्याऽऽनुभक्त्या च संसेव्यमान ॥ ९ ॥

स्वभक्ताग्रगण्यैः कपीशैर्महीशैः
अनीकैरनेकैश्च राम प्रसीद ।
नमस्ते नमोऽस्त्वीश राम प्रसीद
प्रशाधि प्रशाधि प्रकाशं प्रभो माम् ॥ १० ॥

त्वमेवासि दैवं परं मे यदेकम्
सुचैतन्यमेतत् त्वदन्यं न मन्ये।
यतोऽभूदमेयं वियद्वायुतेजो-
जलोर्व्यादिकार्यं चरं चाचरं च॥ ११॥

नमः सच्चिदानन्दरूपाय तस्मै
नमो देवदेवाय रामाय तुभ्यम् ।
नमो जानकीजीवितेशाय तुभ्यम्
नमः पुण्डरीकायताक्षाय तुभ्यम् ॥ १२॥

नमो भक्तियुक्तानुरक्ताय तुभ्यम्
नमः पुण्यपुञ्जैकलभ्याय तुभ्यम् ।
नमो वेदवेद्याय चाद्याय पुंसे
नमः सुन्दरायेन्दिरावल्लभाय॥ १३॥

नमो विश्वकर्त्रे नमो विश्वहर्त्रे
नमो विश्वभोक्त्रे नमो विश्वमात्रे।
नमो विश्वनेत्रे नमो विश्वजेत्रे
नमो विश्वपित्रे नमो विश्वमात्रे॥ १४॥

शिलाऽपि त्वदङ्घ्रिक्षमासङ्गिरेणु-
प्रसादाद्धि चैतन्यमाधत्त राम।
नरस्त्वत् पदद्वन्द्वसेवाविधानात्
सुचैतन्यमेतेति किं चित्रमद्य॥ १५॥

पवित्रं चरित्रं विचित्रं त्वदीयम्
नरा ये स्मरन्त्यन्वहं रामचन्द्र।
भवन्तं भवान्तं भरन्तं भजन्तो
लभन्ते कृतान्तं न पश्यन्त्यतोऽन्ते ॥ १६ ॥

स पुण्यः स गण्यः शरण्यो ममायम्
नरो वेद यो देवचूडामणिं त्वाम् ।
सदाकारमेकं चिदानन्दरूपम्
मनोवागगम्यं परन्धाम राम ॥ १७ ॥

प्रचण्डप्रतापप्रभावाभिभूत-
प्रभूतारिवीर प्रभो रामचन्द्र।
बलं ते कथं वर्ण्यतेऽतीव बाल्ये
यतोऽखण्डि चण्डीशकोदण्डदण्डः ॥ १८ ॥

दशग्रीवमुग्रं सपुत्रं समित्रम्
सरिद्दुर्गमध्यस्थरक्षोगणेशम् ।
भवन्तं विना राम वीरो नरो वा-
ऽसुरो वाऽमरो वा जयेत् कस्त्रिलोक्याम् ॥ १९ ॥

सदा राम रामेति रामामृतं ते
सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्तं नमन्तं सुदन्तं हसन्तम्
हनूमन्तमन्तर्भजे तं नितान्तम् ॥ २० ॥

सदा राम रामेति रामामृतं ते
सदाराममानन्दनिष्यन्दकन्दम् ।
पिबन्नन्वहं नन्वहं नैव मृत्योः
बिभेमि प्रसादादसादात् तवैव ॥ २१ ॥

असीतासमेतैरकोदण्डभूशैः
असौमित्रिवन्द्यैरचण्डप्रतापैः ।
अलङ्केशकालैरसुग्रीवमित्रैः
अरामाभिधेयैरलं देवतैर्नः ॥ २२ ॥

अवीरासनस्थैरचिन्मुद्रिकाढ्यैः
अभक्ताञ्जनेयादितत्त्वप्रकाशैः ।
अमन्दारमूलैरमन्दारमालैः
अरामाभिधेयैरलम् देवतैर्नः ॥ २३ ॥

असिन्धुप्रकोपैरवन्द्यप्रतापैः
अबन्धुप्रयाणैरमन्दस्मिताढ्यैः ।
अदण्डप्रवासैरखण्डप्रबोधैः
अरामभिदेयैरलं देवतैर्नः ॥ २४ ॥

हरे राम सीतापते रावणारे
खरारे मुरारेऽसुरारे परेति ।
लपन्तं नयन्तं सदाकालमेव
समालोकयालोकयाशेषबन्धो ॥ २५ ॥

नमस्ते सुमित्रासुपुत्राभिवन्द्य
नमस्ते सदा कैकयीनन्दनेड्य।
नमस्ते सदा वानराधीशवन्द्य
नमस्ते नमस्ते सदा रामचन्द्र॥२६॥

प्रसीद प्रसीद प्रचण्डप्रताप
प्रसीद प्रसीद प्रचण्डारिकाल।
प्रसीद प्रसीद प्रपन्नानुकम्पिन्
प्रसीद प्रसीद प्रभो रामचन्द्र॥२७॥

भुजङ्गप्रयातं परं वेदसारम्
मुदा रामचन्द्रस्य भक्त्या च नित्यम् ।
पठन् सन्ततं चिन्तयन् स्वान्तरङ्गे
स एव स्वयं रामचन्द्रः स धन्यः॥२८॥

॥इति श्रीमच्छङ्कराचार्यविरचितं रामभुजङ्गप्रयातस्तोत्रं सम्पूर्णम्॥



वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्वं मुनिभ्यः परम्
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

## ॥ अहल्याकृत-रामस्तोत्रम् ॥

अहल्योवाच

अहो कृतार्थाऽस्मि जगन्निवास ते
पादाब्जसंलग्नरजः कणादहम् ।
स्पृशामि यत्पद्मजशङ्करादिभिः
विमृग्यते रन्धितमानसैः सदा ॥ १ ॥

अहो विचित्रं तव राम चेष्टितम्
मनुष्यभावेन विमोहितं जगत् ।
चलस्यजस्रं चरणादिवर्जितः
सम्पूर्ण आनन्दमयोऽतिमायिकः ॥ २ ॥

यत्पादपङ्कजपरागपवित्रगात्रा
भागीरथी भवविरिञ्चिमुखान् पुनाति ।
साक्षात्स एव मम दृग्विषयो यदाऽऽस्ते
किं वर्ण्यते मम पुराकृतभागधेयम् ॥ ३ ॥

मर्त्यावतारे मनुजाकृतिम्
हरिं रामाभिधेयं रमणीयदेहिनम् ।
धनुर्धरं पद्मविशाललोचनम्
भजामि नित्यं न परान् भजिष्ये ॥ ४ ॥

यत्पादपङ्करजःश्रुतिभिर्विमृग्यम्
यन्नाभिपङ्कजभवः कमलासनश्च ।
यन्नामसाररसिको भगवान्पुरारिस्तम्
रामचन्द्रमनिशं हृदि भावयामि ॥ ५ ॥

यस्यावतारचरितानि विरिञ्चिलोके
गायन्ति नारदमुखा भवपद्मजाद्याः।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा
वागीश्वरी च तमहं शरणं प्रपद्ये॥६॥

सोऽयं परात्मा पुरुषः पुराणः
एषः स्वयंज्योतिरनन्त आद्यः।
मायातनुं लोकविमोहनीयाम्
धत्ते परानुग्रह एष रामः॥७॥

अयं हि विश्वोद्भवसंयमानामेकः
स्वमायागुणबिम्बितो यः।
विरिञ्चिविष्णवीश्वरनामभेदान्
धत्ते स्वतन्त्र परिपूर्ण आत्मा॥८॥

नमोऽस्तु ते राम तवाङ्घ्रिपङ्कजम्
श्रिया धृतं वक्षसि लालितं प्रियात्।
आक्रान्तमेकेन जगत्त्रयं पुरा
ध्येयं मुनीन्द्रैरभिमानवर्जितैः॥९॥

जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः।
सर्वभूतेष्वसंयुक्त एको भाति भवान् परः॥१०॥

ओङ्कारवाच्यस्त्वं राम वाचामविषयः पुमान्।
वाच्यवाचकभेदेन भवानेव जगन्मयः॥११॥

कार्यकारणकर्तृत्वसफलसाधनभेदतः।
एको विभासि राम त्वं मायया बहुरूपया॥१२॥

त्वन्मायामोहितधियस्त्वां न जानन्ति तत्वतः।
मानुषं त्वाऽभिमन्यन्ते मायिनं परमेश्वरम् ॥१३॥

आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः।
असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः ॥१४॥

योषिन्मूढाहमज्ञा ते तत्वं जाने कथं विभो।
तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः ॥१५॥

देव मे यत्रकुत्रापि स्थिताया अपि सर्वदा।
त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे ॥१६॥

नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल।
नमस्तेऽस्तु हृषीकेश नारायण नमोऽस्तु ते ॥१७॥

भवभयहरमेकं भानुकोटिप्रकाशम्
करधृतशरचापं कालमेघावभासम् ।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यम्
कमलविशदनेत्रं सानुजं राममीडे ॥१८॥

स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम् ।
परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम् ॥१९॥

अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः।
स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति ॥२०॥

पुत्राद्यर्थे पठेद्भक्त्या रामं हृदि निधाय च।
संवत्सरेण लभते वन्ध्या अपि सुपुत्रकम् ॥२१॥

सर्वान्कामानवाप्नोति रामचन्द्रप्रसादतः ॥ २२ ॥

ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा।
मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धादरः ॥ २३ ॥

नित्यं स्तोत्रमिदं जपन् रघुपतिं भक्त्या हृदिस्थं स्मरन् ।
ध्यायन् मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ॥ २४ ॥

॥ इति श्रीमदध्यात्मरामायणे
अहल्याविरचितं श्रीरामचन्द्रस्तोत्रं सम्पूर्णम् ॥

## ॥ आपदुद्धारण स्तोत्रम् ॥

ॐ आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ १ ॥

आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम् ।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ॥ २ ॥

नमः कोदण्डहस्ताय सन्धीकृतशराय च।
खण्डिताखिलदैत्याय रामायऽऽपन्निवारिणे ॥ ३ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ४ ॥

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ।
आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ ॥ ५ ॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा।
गच्छन् ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ॥ ६ ॥

अच्युतानन्तगोविन्द नामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगास्सत्यं सत्यं वदाम्यहम् ॥७॥

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते।
वेदाच्छास्त्रं परं नास्ति न देवं केशवात्परम् ॥८॥

शरीरे जर्झरीभूते व्याधिग्रस्ते कलेवरे।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः॥९॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः॥१०॥



# ॥ हनुमान् चालीसा ॥

श्रीगुरु चरन सरोज रज
निज मनु मुकुर सुधार।
बरनऊँ रघुवर विमल यश
जो दायकु फल चार॥

बुद्धिहीन तनु जानिके
सुमिरौं पवनकुमार।
बल बुद्धि विद्या देहु मोहिं
हरहु कलेस विकार॥

## ॥ चौपाई ॥

जय हनुमान ज्ञान गुण सागर।
जय कपीश तिहुँ लोक उजागर॥ १॥

राम दूत अतुलित बल धामा।
अञ्जनिपुत्र पवनसुत नामा॥ २॥

महावीर विक्रम बजरङ्गी।
कुमति निवार सुमति के सङ्गी॥ ३॥

कञ्चन बरन विराज सुवेसा।
कानन कुण्डल कुञ्चित केशा॥ ४॥

हाथ वज्र औ ध्वजा विराजै।
काँधे मूँज जनेऊ साजै॥ ५॥

सङ्कर सुवन केसरीनन्दन।
तेज प्रताप महा जग वन्दन॥ ६॥

विद्यावान गुणी अति चातुर।
राम काज करिबे को आतुर॥ ७॥

प्रभु चरित्र सुनिबे को रसिया।
राम लखन सीता मन बसिया॥ ८॥

राम लक्ष्मण जानकी।
जय बोलो हनुमान् की॥

सूक्ष्म रूप धरि सियहिं दिखावा।
विकट रूप धरि लङ्क जरावा॥ ९॥

भीम रूप धरि असुर सँहारे।
रामचन्द्र के काज सँवारे॥ १०॥

लाय सजीवन लखन जियाये।
श्रीरघुवीर हरषि उर लाये॥ ११॥

रघुपति कीन्ही बहुत बडाई।
तुम मम प्रिय भरत सम भाई॥ १२॥

सहस वदन तुम्हरो यश गावैं।
अस कहि श्रीपति कण्ठ लगावैं॥ १३॥

सनकादिक ब्रह्मादि मुनीशा।
नारद शारद सहित अहीशा॥ १४॥

यम कुबेर दिक्पाल जहाँ ते।
कवि कोविद कहि सके कहाँ ते॥ १५॥

तुम उपकार सुग्रीवहिं कीन्हा।
राम मिलाय राज पद दीन्हा॥ १६॥

राम लक्ष्मण जानकी।
जय बोलो हनुमान् की॥

तुम्हरो मन्त्र विभीषण माना।
लङ्केश्वर भये सब जग जाना॥ १७॥

युग सहस्र योजन पर भानू।
लील्यो ताहि मधुर फल जानू॥१८॥

प्रभु मुद्रिका मेलि मुख माहीं।
जलधि लाँघि गये अचरज नाहीं॥१९॥

दुर्गम काज जगत के जेते।
सुगम अनुग्रह तुम्हरे तेते॥२०॥

राम दुआरे तुम रखवारे।
होत न आज्ञा बिन पैसारे॥२१॥

सब सुख लहै तुम्हारी सरना।
तुम रक्षक काहू को डर ना॥२२॥

आपन तेज सम्हारो आपै।
तीनों लोक हाँक तें काँपै॥२३॥

भूत पिशाच निकट नहिं आवै।
महावीर जब नाम सुनावै॥२४॥

राम लक्ष्मण जानकी।
जय बोलो हनुमान् की॥

नाशै रोग हरै सब पीरा।
जपत निरन्तर हनुमत वीरा॥२५॥

सङ्कट से हनुमान छुडावै।
मन क्रम वचन ध्यान जो लावै॥२६॥

सब पर राम तपस्वी राजा।
तिन के काज सकल तुम साजा॥२७॥

और मनोरथ जो कोई लावै।
दासु अमित जीवन फल पावै॥२८॥

चारों युग प्रताप तुम्हारा।
है प्रसिद्ध जगत उजियारा॥२९॥

साधु सन्त के तुम रखवारे।
असुर निकन्दन राम दुलारे॥३०॥

अष्ट सिद्धि नव निधि के दाता।
अस बर दीन जानकी माता॥३१॥

राम रसायन तुम्हरे पासा।
सदा रहो रघुपति के दासा॥३२॥

राम लक्ष्मण जानकी।
जय बोलो हनुमान् की॥

तुम्हरे भजन राम को पावै।
जन्म जन्म के दुख बिसरावै॥३३॥

अन्त काल रघुपति पुर जाई।
जहाँ जन्मि हरिभक्त कहाई॥३४॥

और देवता चित्त न धरई।
हनुमत सेई सर्व सुख करई॥३५॥

सङ्कट कटै मिटै सब पीरा।
जो सुमिरै हनुमत बलवीरा॥३६॥

जै जै जै हनुमान गोसाईं।
कृपा करहु गुरु देव की नाईं॥३७॥

यह शत पार पाठ कर कोई।
छूटहि बंदि महा सुख होई॥३८॥

यो यह पढ़ै हनुमान् चलीसा।
होय सिद्धि साखी गौरीसा॥३९॥

तुलसीदास सदा हरि चेरा।
कीजै नाथ हृदय मँह डेरा॥४०॥

राम लक्ष्मण जानकी।
जय बोलो हनुमान् की॥

## ॥ हनुमत् पञ्चरत्नम् ॥

वीताखिल-विषयेच्छं जातानन्दाश्रु-पुलकमत्यच्छम् ।
सीतापति-दूताद्यं वातात्मजमद्य भावये हृद्यम् ॥ १ ॥

तरुणारुण-मुख-कमलं करुणा-रसपूर-पूरितापाङ्गम् ।
सञ्जीवनमाशासे मञ्जुल-महिमानमञ्जना-भाग्यम् ॥ २ ॥

शम्बरवैरि-शरातिगमम्बुजदल-विपुल-लोचनोदारम् ।
कम्बुगलमनिलदिष्टम् बिम्ब-ज्वलितोष्ठमेकमवलम्बे ॥ ३ ॥

दूरीकृत-सीतार्तिः प्रकटीकृत-रामवैभव-स्फूर्तिः ।
दारित-दशमुख-कीर्तिः पुरतो मम भातु हनुमतो मूर्तिः ॥ ४ ॥

वानर-निकराध्यक्षं दानवकुल-कुमुद-रविकर-सदृशम् ।
दीन-जनावन-दीक्षं पवनतपः पाकपुञ्जमद्राक्षम् ॥ ५ ॥

एतत् पवनसुतस्य स्तोत्रं यः पठति पञ्चरत्नाख्यम् ।
चिरमिह-निखिलान् भोगान् भुक्त्वा श्रीराम-भक्तिभाग् भवति ॥ ६ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं हनुमत्-पञ्चरत्नं सम्पूर्णम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृत-मस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्ण-लोचनं मारुतिं नमत राक्षसान्तकम् ॥

असाध्यसाधक स्वामिन् असाध्यं तव किं वद ।
रामदूतकृपसिन्धो मत्कार्यं साधय प्रभो ॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वम् अरोगता ।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद्भवेत् ॥



## ॥ कृष्णाष्टकम् १ ॥

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ १॥

यतः सर्वं जातं वियदनिलमुख्यं जगदिदम्
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ २॥

असूनायम्यादौ यमनियममुख्यैः सुकरणैः
निरुद्ध्येदं चित्तं हृदि विलयमानीय सकलम्।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ३॥

पृथिव्यां तिष्ठन् यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम्।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ४॥

महेन्द्रादिर्देवो जयति दितिजान् यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते।
बलारातेर्गर्वं परिहरति योऽसौ विजयिनः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ५॥

विना यस्य ध्यानं व्रजति पशुतां सूकरमुखाम्
विना यस्य ज्ञानं जनिमृतिभयं याति जनता।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ६॥

नरातङ्कोट्टङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः।
स्वयम्भूर्भूतानां जनक उचिताचारसुखदः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ७॥

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ ८॥

॥इति श्रीमच्छङ्कराचार्यविरचितं कृष्णाष्टकं सम्पूर्णम्॥

## ॥ कृष्णाष्टकम् २॥

नित्यानन्दैकरसं सच्चिन्मात्रं स्वयं ज्योतिः।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशम् ॥

भजे व्रजैकमण्डनं समस्तपापखण्डनम्
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम् ।
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकम्
अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥ १॥

मनोजगर्वमोचनं विशाललोललोचनम्
विधूतगोपशोचनं नमामि पद्मलोचनम् ।
करारविन्दभूधरं स्मितावलोकसुन्दरम्
महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥२॥

कदम्बसूनकुण्डलं सुचारुगण्डमण्डलम्
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम् ।
यशोदया समोदया सगोपया सनन्दया
युतं सुखैकदायकं नमामि गोपनायकम् ॥३॥

सदैव पादपङ्कजं मदीय मानसे निजम्
दधानमुक्तमालकं नमामि नन्दबालकम् ।
समस्तदोषशोषणं समस्तलोकपोषणम्
समस्तगोपमानसं नमामि नन्दलालसम् ॥४॥

भुवो भरावतारकं भवाब्धिकर्णधारकम्
यशोमतीकिशोरकं नमामि चित्तचोरकम् ।
दृगन्तकान्तभङ्गिनं सदा सदालिसङ्गिनम्
दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥५॥

गुणाकरं सुखाकरं कृपाकरं कृपापरम्
सुरद्विषन्निकन्दनं नमामि गोपनन्दनम् ।
नवीनगोपनागरं नवीनकेलिलम्पटम्
नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥६॥

समस्तगोपनन्दनं हृदम्बुजैकमोदनम्
नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम् ।
निकामकामदायकं दृगन्तचारुसायकम्
रसालवेणुगायकं नमामि कुञ्जनायकम् ॥७॥

विदग्धगोपिकामनोमनोज्ञतल्पशायिनम्
नमामि कुञ्जकानने प्रवृद्धवह्निपायिनम् ।
किशोरकान्तिरञ्जितं दृगञ्जनं सुशोभितम्
गजेन्द्रमोक्षकारिणं नमामि श्रीविहारिणम् ॥८॥

यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम् ।
प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान्
भवेत् स नन्दनन्दने भवे भवे सुभक्तिमान् ॥

॥इति श्रीमच्छङ्कराचार्यविरचितं श्रीकृष्णाष्टकं सम्पूर्णम्॥

## ॥कृष्णाष्टकम् ३॥

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वंदे जगद्गुरुम् ॥१॥

आतसीपुष्पसङ्काशं हारनूपुरशोभितम् ।
रत्नकण्कणकेयूरं कृष्णं वन्दे जगद्गुरुम् ॥२॥

कुटिलालकसंयुक्तं पूर्णचन्द्रनिभाननम् ।
विलसत् कुण्डलधरं कृष्णं वन्दे जगद्गुरुम् ॥३॥

मन्दारगन्धसंयुक्तं चारुहासं चतुर्भुजम् ।
बर्हिपिञ्छावचूडाङ्गं कृष्णं वन्दे जगद्गुरुम् ॥४॥

उत्फुल्लपद्मपत्राक्षं नीलजीमूतसन्निभम् ।
यादवानां शिरोरत्नं कृष्णं वन्दे जगद्गुरुम् ॥५॥

रुक्मिणीकेळिसंयुक्तं पीताम्बरसुशोभितम् ।
अवाप्ततुलसीगन्धं कृष्णं वन्दे जगद्गुरुम् ॥६॥

गोपिकानां कुचद्वन्द्वं कुङ्कुमाङ्कितवक्षसम् ।
श्रीनिकेतं महेष्वासं कृष्णं वन्दे जगद्गुरुम् ॥७॥

श्रीवत्साङ्कं महोरस्कं वनमालाविराजितम् ।
शङ्खचक्रधरं देवं कृष्णं वन्दे जगद्गुरुम् ॥८॥

कृष्णाष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
कोटिजन्मकृतं पापं स्मरणेन विनश्यति॥

॥इति श्री कृष्णाष्टकं सम्पूर्णम्॥

## ॥गोविन्दाष्टकम्॥

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशम्
गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारम्
क्ष्मामा नाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥१॥

मृत्स्नामत्सीहेति यशोदाताडनशैशव-सन्त्रासम्
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।
लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकम्
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥२॥

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नम्
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासम्
शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥३॥

गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालम्
गोपीखेलनगोवर्धनधृतलीलालालितगोपालम् ।
गोभिर्निगदित-गोविन्दस्फुटनामानं बहुनामानम्
गोधीगोचरदूरं प्रणमत गोविन्दं परमानन्दम् ॥४॥

गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभम्
शश्वद्गोखुरनिर्धूतोद्गतधूलीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावम्
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥५॥

स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढम्
व्यादित्सन्तीरथ दिग्वस्त्रा दातुमुपाकर्षन्तं ताः।
निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तःस्थम्
सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥६॥

कान्तं कारणकारणमादिमनादिं कालघनाभासम्
कालिन्दीगतकालियशिरसि सुनृत्यन्तं मुहुरत्यन्तम् ।
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नम्
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥७॥

बृन्दावनभुवि बृन्दारकगण बृन्दाराधित वन्द्येऽहम्
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् ।
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वम्
वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥८॥

गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यः
गोविन्द अच्युत माधव विष्णो गोकुलनायक कृष्णेति।
गोविन्दाङ्घ्रि-सरोजध्यान-सुधाजलधौत-समस्ताघः
गोविन्दं परमानन्दामृतम् अन्तःस्थं स तमभ्येति॥

॥इति श्रीमच्छङ्कराचार्यविरचितं गोविन्दाष्टकं सम्पूर्णम् ॥

## ॥गीतगोविन्दम्॥

### ॥श्री जयदेव ध्यानम्॥

श्रीगोपलविलासिनी वलयसद्रत्नादिमुग्धाकृति
श्रीराधापतिपादपद्मभजनानन्दाब्धिमग्नोऽनिशम् ।
लोके सत्कविराजराज इति यः ख्यातो दयाम्भोनिधिः
तं वन्दे जयदेवसद्गुरुमहं पद्मावतीवल्लभम् ॥

प्रलयपयोधिजले केशव धृतवानसि वेदम्।
विहितवहित्रचरित्रमखेदम्॥
केशव धृतमीनशरीर जय जगदीश हरे॥ १ ॥

क्षितिरसि विपुलतरे केशव तव तिष्ठति पृष्ठे।
धरणिधरणकिणचक्रगरिष्ठे॥
केशव धृतकच्छपरूप जय जगदीश हरे॥ २ ॥

वसति दशनशिखरे केशव धरणी तव लग्ना।
शशिनि कलङ्ककलेव निमग्ना॥
केशव धृतसूकररूप जय जगदीश हरे॥ ३ ॥

तव करकमलवरे केशव नखमद्भुतशृङ्गम्।
दलितहिरण्यकशिपुतनुभृङ्गम्॥
केशव धृतनरहरिरूप जय जगदीश हरे॥ ४ ॥

छलयसि विक्रमणे केशव बलिमद्भुतवामन।
पदनखनीरजनितजनपावन॥
केशव धृतवामनरूप जय जगदीश हरे॥ ५ ॥

क्षत्रियरुधिरमये केशव जगदपगतपापम्।
स्नपयसि पयसि शमितभवतापम्॥
केशव धृतभृगुपतिरूप जय जगदीश हरे॥ ६ ॥

वितरसि दिक्षु रणे केशव दिक्पतिकमनीयम्।
दशमुखमौलिबलिं रमणीयं॥
केशव धृतरामशरीर जय जगदीश हरे॥ ७ ॥

वहसि वपुषि विशदे केशव वसनं जलदाभम्।
हलहतिभीतिमिलितयमुनाभम्॥
केशव धृतहलधररूप जय जगदीश हरे॥८॥

निन्दसि यज्ञविधेः केशव अहह श्रुतिजातम्।
सदयहृदयदर्शितपशुघातम्॥
केशव धृतबुद्धशरीर जय जगदीश हरे॥९॥

म्लेच्छनिवहनिधने केशव कलयसि करवालम्।
धूमकेतुमिव किमपि करालम्॥
केशव धृतकल्किशरीर जय जगदीश हरे॥१०॥

श्रीजयदेवकवेः केशव इदमुदितमुदारम्।
श्रृणु शुभदं सुखदं भवसारम्॥
केशव धृतदशविधरूप जय जगदीश हरे॥११॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥

॥इति श्री जयदेवविरचितं दशावतार-गीतगोविन्दं सम्पूर्णम्॥

# ॥ भज गोविन्दम् ॥

भज गोविन्दं भज गोविन्दम्
गोविन्दं भज मूढमते।
सम्प्राप्ते सन्निहिते काले
न हि न हि रक्षति डुकृञ् करणे ॥ १ ॥

मूढ जहीहि धनागमतृष्णाम्
कुरु सद्बुद्धिं मनसि वितृष्णाम् ।
यल्लभसे निजकर्मोपात्तम्
वित्तं तेन विनोदय चित्तम् ॥ २ ॥

नारीस्तनभरनाभीदेशं
दृष्ट्वा मा गा मोहावेशम् ।
एतन्मांसावसादि विकारम्
मनसि विचिन्तय वारं वारम् ॥ ३ ॥

नलिनीदलगतजलमतितरलम्
तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याध्यभिमानग्रस्तम्
लोकं शोकहतं च समस्तम् ॥ ४ ॥

यावद्वित्तोपार्जन-सक्तः
तावन्निज-परिवारो रक्तः।
पश्चाज्जीवति जर्जरदेहे
वार्तां कोऽपि न पृच्छति गेहे ॥ ५ ॥

यावत् पवनो निवसति देहे
तावत् पृच्छति कुशलं गेहे।
गतवति वायौ देहापाये
भार्या बिभ्यति तस्मिन् काये ॥ ६ ॥

बालस्तावत्क्रीडासक्तः
तरुणस्तावत्तरुणीसक्तः ।
वृद्धस्तावच्चिन्तासक्तः
परे ब्रह्मणि कोऽपि न सक्तः ॥ ७ ॥

का ते कान्ता कस्ते पुत्रः
संसारोऽयमतीव विचित्रः।
कस्य त्वं कः कुत आयातः
तत्त्वं चिन्तय तदिह भ्रातः ॥ ८ ॥

सत्सङ्गत्वे निस्सङ्गत्वम्
निस्सङ्गत्वे निर्मोहत्वम् ।
निर्मोहत्वे निश्चलितत्त्वम्
निश्चलितत्त्वे जीवन-मुक्तिः ॥ ९ ॥

वयसि गते कः कामविकारः
शुष्के नीरे कः कासारः।
क्षीणे वित्ते कः परिवारः
ज्ञाते तत्त्वे कः संसारः ॥ १० ॥

मा कुरु धनजनयौवनगर्वम्
हरति निमेषात् कालः सर्वम् ।
मायामयमिदमखिलं हित्वा
ब्रह्मपदं त्वं प्रविश विदित्वा ॥ ११ ॥

दिनयामिन्यौ सायं प्रातः
शिशिरवसन्तौ पुनरायातः।
कालः क्रीडति गच्छत्यायुः
तदपि न मुञ्चत्याशावायुः ॥ १२ ॥

द्वादशमञ्जरिकाभिरशेषः
कथितो वैयाकरणस्यैषः।
उपदेशो भूद्विद्यानिपुणैः
श्रीमच्छङ्करभगवच्छरणैः॥

का ते कान्ता धनगतचिन्ता
वातुल किं तव नास्ति नियन्ता।
त्रिजगति सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका॥ १३॥

जटिलो मुण्डी लुञ्छितकेशः
काषायाम्बरबहुकृतवेषः ।
पश्यन्नपि चन पश्यति मूढः
उदरनिमित्तं बहुकृतवेषः॥ १४॥

अङ्गं गलितं पलितं मुण्डम्
दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डम्
तदपि न मुञ्चत्याशापिण्डम् ॥ १५॥

अग्रे वह्निः पृष्ठे भानुः
रात्रौ चुबुकसमर्पितजानुः।
करतलभिक्षस्तरुतलवासः
तदपि न मुञ्चत्याशापाशः॥ १६॥

कुरुते गङ्गासागरगमनं
व्रतपरिपालनमथवा दानम् ।
ज्ञानविहीनः सर्वमतेन
मुक्तिं न भजति जन्मशतेन॥ १७॥

सुरमन्दिर-तरुमूल-निवासः
शय्या भूतलमजिनं वासः।
सर्व-परिग्रह भोगत्यागः
कस्य सुखं न करोति विरागः॥ १८॥

योगरतो वा भोगरतो वा
सङ्गरतो वा सङ्गविहीनः।
यस्य ब्रह्मणि रमते चित्तं
नन्दति नन्दति नन्दत्येव॥ १९॥

भगवद्गीता किञ्चिदधीता
गङ्गाजललव-कणिका पीता।
सकृदपि येन मुरारि समर्चा
क्रियते तस्य यमेन न चर्चा॥ २०॥

पुनरपि जननं पुनरपि मरणम्
पुनरपि जननी-जठरे शयनम् ।
इह संसारे बहुदुस्तारे
कृपयाऽपारे पाहि मुरारे॥ २१॥

रथ्या-चर्पट-विरचित-कन्थः
पुण्यापुण्य-विवर्जित-पन्थः।
योगी योगनियोजित चित्तो
रमते बालोन्मत्तवदेव॥ २२॥

कस्त्वं कोऽहं कुत आयातः
का मे जननी को मे तातः।
इति परिभावय सर्वमसारम्
विश्वं त्यक्त्वा स्वप्नविचारम् ॥ २३॥

त्वयि मयि चान्यत्रैको विष्णुः
व्यर्थं कुप्यसि मय्यसहिष्णुः।
सर्वस्मिन्नपि पश्यात्मानं
सर्वत्रोत्सृज भेदाज्ञानम् ॥२४॥

शत्रौ मित्रे पुत्रे बन्धौ
मा कुरु यत्नं विग्रहसन्धौ।
भव समचित्तः सर्वत्र त्वम्
वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥२५॥

कामं क्रोधं लोभं मोहं
त्यक्त्वाऽऽत्मानं भावय कोऽहम् ।
आत्मज्ञानविहीना मूढाः
ते पच्यन्ते नरकनिगूढाः॥२६॥

गेयं गीता नामसहस्रं
ध्येयं श्रीपति-रूपमजस्रम् ।
नेयं सज्जन-सङ्गे चित्तं
देयं दीनजनाय च वित्तम् ॥२७॥

सुखतः क्रियते रामाभोगः
पश्चाद्धन्त शरीरे रोगः।
यद्यपि लोके मरणं शरणं
तदपि न मुञ्चति पापाचरणम् ॥२८॥

अर्थमनर्थं भावय नित्यं
नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः
सर्वत्रैषा विहिता रीतिः॥२९॥

प्राणायामं प्रत्याहारं
नित्यानित्य-विवेकविचारम् ।
जाप्यसमेत-समाधिविधानं
कुर्ववधानं महदवधानम् ॥३०॥

गुरुचरणाम्बुज-निर्भर-भक्तः
संसारादचिराद्भव मुक्तः।
सेन्द्रियमानस-नियमादेवं
द्रक्ष्यसि निजहृदयस्थं देवम् ॥३१॥

मूढः कश्चन वैयाकरणो
डुकृञ्करणाध्ययन-धुरिणः ।
श्रीमच्छङ्कर-भगवच्छिष्यैः
बोधित आसिच्छोधितकरणः॥३२॥

भज गोविन्दं भज गोविन्दम्
गोविन्दं भज मूढमते।
नामस्मरणादन्यमुपायं
न हि पश्यामो भवतरणे॥३३॥

॥इति श्रीमच्छङ्कराचार्यविरचितं भज गोविन्दं सम्पूर्णम्॥

# ॥ मधुराष्टकम् ॥

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥
वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥
गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥
करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥
गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥
गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।
दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥
गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥

॥ इति श्रीमद्वल्लभाचार्यविरचितं मधुराष्टकं सम्पूर्णम् ॥

# ॥ अच्युताष्टकम् ॥

अच्युतं केशवं राम-नारायणम्
कृष्ण-दामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभम्
जानकीनायकं रामचन्द्रं भजे ॥ १ ॥

अच्युतं केशवं सत्यभामाधवम्
माधवं श्रीधरं राधिकाराधितम् ।
इन्दिरा मन्दिरं चेतसा सुन्दरम्
देवकीनन्दनं नन्दनं सन्दधे ॥ २ ॥

विष्णवे जिष्णवे शङ्खिने चक्रिणे
रुक्मिणी-रागिने जानकी-जानये ।
वल्लवी-वल्लभायाऽर्चितायात्मने
कंस-विध्वंसिने वंशिने ते नमः ॥ ३ ॥

कृष्ण गोविन्द हे राम नारायण
श्रीपते वासुदेवार्जित-श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज
द्वारका-नायक द्रौपदी-रक्षक ॥ ४ ॥

राक्षसक्षोभितः सीतया शोभितो
दण्डकारण्य-भू-पुण्यता-कारणः ।
लक्ष्मणेनान्वितो वानरैः सेवितो-
ऽगस्त्सम्पूजितो राघवः पातु माम् ॥ ५ ॥

धेनुकारिष्टकोऽनिष्टकृद्-द्वेषिणाम्
केशिहा कंसहृद्-वंशिकावादकः।
पूतनाकोपकः सूरजा-खेलनो
बाल-गोपालकः पातु मां सर्वदा॥६॥

विद्युदाद्योतवान् प्रस्फुरद्वाससम्
प्रावृडम्भोदवत् प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरस्थलम्
लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे॥७॥

कुञ्चितैः कुन्तलैर्भ्राजिमानाननम्
रत्नमौलिं लसत् कुण्डलं गण्डयोः।
हारकेयूरकं कङ्कण-प्रोज्वलम्
किङ्किणी-मञ्जुलं श्यामलं तं भजे॥८॥

॥इति श्रीमच्छङ्कराचार्यविरचितं श्री अच्युताष्टकं सम्पूर्णम्॥



कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभम्
नासाग्रे वरमौक्तिकं करतले वेणुः करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं सुललितं कण्ठे च मुक्तावली
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥

अस्ति स्वस्तरुणीकराग्रविगलत् कल्पप्रसूनाप्लुतम्
वस्तुप्रस्तुतवेणुनादलहरी निर्वाणनिर्व्याकुलम् ।
स्रस्तस्रस्तनिबद्धनीविविलसत् गोपीसहस्रावृतम्
हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति॥

# ॥ बालमुकुन्दाष्टकम् ॥

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ १ ॥

संहृत्य लोकान् वटपत्रमध्ये शयानमाद्यन्तविहीनरूपम् ।
सर्वेश्वरं सर्वहितावतारं बालं मुकुन्दं मनसा स्मरामि ॥ २ ॥

इन्दीवरश्यामलकोमलाङ्गं इन्द्रादिदेवार्चितपादपद्मम् ।
सन्तानकल्पद्रुममाश्रितानां बालं मुकुन्दं मनसा स्मरामि ॥ ३ ॥

लम्बालकं लम्बितहारयष्टिं श्रृङ्गारलीलाङ्कितदन्तपङ्क्तिम् ।
बिम्बाधरं चारुविशालनेत्रं बालं मुकुन्दं मनसा स्मरामि ॥ ४ ॥

शिक्ये निधायाद्यपयोदधीनि बहिर्गतायां व्रजनायिकायाम् ।
भुक्त्वा यथेष्टं कपटेन सुप्तं बालं मुकुन्दं मनसा स्मरामि ॥ ५ ॥

कलिन्दजान्तस्थितकालियस्य फणाग्ररङ्गे नटनप्रियन्तम् ।
तत्पुच्छहस्तं शरदिन्दुवक्त्रं बालं मुकुन्दं मनसा स्मरामि ॥ ६ ॥

उलूखले बद्धमुदारशौर्यं उत्तुङ्गयुग्मार्जुन-भङ्गलीलम् ।
उत्फुल्लपद्मायत-चारुनेत्रं बालं मुकुन्दं मनसा स्मरामि ॥ ७ ॥

आलोक्य मातुर्मुखमादरेण स्तन्यं पिबन्तं सरसीरुहाक्षम् ।
सच्चिन्मयं देवमनन्तरूपं बालं मुकुन्दं मनसा स्मरामि ॥ ८ ॥

॥ इति बालमुकुन्दाष्टकं सम्पूर्णम् ॥

आकुञ्चितं जानु करं च वामं न्यस्य क्षितौ दक्षिणहस्तपद्मे ।
आलोकयन्तं नवनीतखण्डं बालं मुकुन्दं मनसा स्मरामि ॥

## ॥ कृष्णद्वादशनामस्तोत्रम् ॥

श्रृणुध्वं मुनयः सर्वे गोपलस्य महात्मनः।
अनन्तस्याप्रमेयस्य नामद्वाशकं स्तवम् ॥

अर्जुनाय पुरा गीतं गोपालेन महात्मना।
द्वारकायां प्रार्थयते यशोदायाश्च सन्निधौ॥

॥ ध्यानम् ॥

जानुभ्यामपि धावन्तं बाहुभ्यामतिसुन्दरम् ।
सकुण्डलाळकं बालं गोपालं चिन्तयेदुषः॥

॥ स्तोत्रम् ॥

प्रथमं तु हरिं विद्यात् द्वितीयं केशवं तथा।
तृतीयं पद्मनाभं तु चतुर्थं वामनं तथा॥ १॥

पञ्चमं वेदगर्भं च षष्ठं तु मधुसूदनं।
सप्तमं वासुदेवं च वराहं चाष्टमं तथा॥ २॥

नवमं पुण्डरीकाक्षं दशमं तु जनार्दनम् ।
कृष्णमेकादशं प्रोक्तं द्वादशं श्रीधरं तथा॥ ३॥

एतद्द्वादशनामानि मया प्रोक्तानि फाल्गुन।
कालत्रये पठेद्यस्तु तस्य पुण्यफलं श्रृणु॥ ४॥

चान्द्रायणसहस्रस्य कन्यादानशतस्य च।
अश्वमेधसहस्रस्य फलमाप्नोति मानवः॥ ५॥

॥ इति श्रीकृष्णद्वादशनामस्तोत्रं सम्पूर्णम् ॥

# ॥ श्रीविष्णुभुजङ्गप्रयातस्तोत्रम् ॥

चिदंशं विभुं निर्मलं निर्विकल्पम्
निरीहं निराकारमोङ्कारगम्यम् ।
गुणातीतमव्यक्तमेकं तुरीयम्
परं ब्रह्म यं वेद तस्मै नमस्ते ॥ १ ॥

विशुद्धं शिवं शान्तमाद्यन्तशून्यम्
जगज्जीवनं ज्योतिरानन्दरूपम् ।
अदिग्देशकालव्यवच्छेदनीयम्
त्रयी वक्ति यं वेद तस्मै नमस्ते ॥ २ ॥

महायोगपीठे परिभ्राजमाने
धरण्यादितत्त्वात्मके शक्तियुक्ते।
गुणाहस्करे वह्निबिम्बार्धमध्ये
समासीनमोङ्कर्णिकेऽष्टाक्षराब्जे ॥ ३ ॥

समानोदितानेकसूर्येन्दुकोटि-
प्रभापूरतुल्यद्युतिं दुर्निरीक्षम् ।
न शीतं न चोष्णं सुवर्णावदात-
प्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४ ॥

सुनासापुटं सुन्दरभ्रूललाटम्
किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत् पुण्डरीकाभिरामायताक्षम्
समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५ ॥

लसत् कुण्डलामृष्टगण्डस्थलान्तम्
जपारागचोराधरं चारुहासम् ।
अलिव्याकुलामोलिमन्दारमालम्
महोरस्फुरत्कौस्तुभोदारहारम् ॥६॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डैः
चतुर्भिश्चलत्कङ्कणालङ्कृताग्रैः।
उदारोदरालङ्कृतं पीतवस्त्रम्
पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥७॥

स्वभक्तेषु सन्दर्शिताकारमेवम्
सदा भावयन् सन्निरुद्धेन्द्रियाश्वः।
दुरापं नरो याति संसारपारम्
परस्मै परेभ्योऽपि तस्मै नमस्ते ॥८॥

श्रिया शातकुम्भद्युतिस्निग्धकान्त्या
धरण्या च दूर्वादलश्यामलाङ्ग्या।
कलत्रद्वयेनामुना तोषिताय
त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥९॥

शरीरं कलत्रं सुतं बन्धुवर्गम्
वयस्यं धनं सद्म भृत्यं भुवं च।
समस्तं परित्यज्य हा कष्टमेको
गमिष्यामि दुःखेन दूरं किलाहम् ॥१०॥

जरेयं पिशाचीव हा जीवतो मे
वसामक्ति रक्तं च मांसं बलं च।
अहो देव सीदामि दीनानुकम्पिम्
किमद्यापि हन्त त्वयोदासितव्यम् ॥११॥

कफव्याहतोष्णोल्बणश्वासवेग-
व्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामसङ्ख्यामवस्थाम्
बिभेमि प्रभो किं करोमि प्रसीद॥१२॥

लपन्नच्युतानन्त गोविन्द विष्णो
मुरारे हरे नाथ नारायणेति।
यथाऽनुस्मरिष्यामि भक्त्या भवन्तम्
तथा मे दयाशील देव प्रसीद॥१३॥

भुजङ्गप्रयातं पठेद्यस्तु भक्त्या
समाधाय चित्ते भवन्तं मुरारे।
स मोहं विहायाशु युष्मत्प्रसादात्
समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥१४॥

॥इति श्रीमच्छङ्कराचर्यविरचितं
श्रीविष्णुभुजङ्गप्रयातस्तोत्रं सम्पूर्णम्॥



# ॥ शिवमानसपूजा ॥

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् ।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥ २ ॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलम्
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत् समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥ ३ ॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाऽऽराधनम् ॥ ४ ॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ ५ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता शिवमानसपूजा सम्पूर्णा ॥

# ॥ वैद्यनाथाष्टकम् ॥

श्रीराम-सौमित्रि-जटायु-वेद-षडाननादित्य-कुजार्चिताय।
श्रीनीलकण्ठाय दयामयाय श्रीवैद्यनाथाय नमः शिवाय॥ १ ॥

गङ्गाप्रवाहेन्दुजटाधराय त्रिलोचनाय स्मरकालहन्त्रे।
समस्तदेवैरभिपूजिताय श्रीवैद्यनाथाय नमः शिवाय॥ २ ॥

भक्तःप्रियाय त्रिपुरान्तकाय पिनाकिने दुष्टहराय नित्यम् ।
प्रत्यक्षलीलाय मनुष्यलोके श्रीवैद्यनाथाय नमः शिवाय॥ ३ ॥

प्रभूतवातादि-समस्तरोगप्रनाशकर्त्रे मुनिवन्दिताय।
प्रभाकरेन्द्वग्निविलोचनाय श्रीवैद्यनाथाय नमः शिवाय॥ ४ ॥

वाक्श्रोत्रनेत्राङ्घ्रि-विहीनजन्तोः वाक्श्रोत्रनेत्राङ्घ्रि-सुखप्रदाय।
कुष्ठादिसर्वोन्नतरोगहन्त्रे श्रीवैद्यनाथाय नमः शिवाय॥ ५ ॥

वेदान्तवेद्याय जगन्मयाय योगीश्वरध्येयपदाम्बुजाय।
त्रिमूर्तिरूपाय सहस्रनाम्ने श्रीवैद्यनाथाय नमः शिवाय॥ ६ ॥

स्वतीर्थमृद्भस्मभृताङ्गभाजां पिशाचदुःखार्तिभयापहाय।
आत्मस्वरूपाय शरीरभाजां श्रीवैद्यनाथाय नमः शिवाय॥ ७ ॥

श्रीनीलकण्ठाय वृषध्वजाय स्रक्गन्धभस्माद्यभिशोभिताय।
सुपुत्रदारादिसुभाग्यदाय श्रीवैद्यनाथाय नमः शिवाय॥ ८ ॥

वालाम्बिकेश वैद्येश भवरोगहरेति च।
जपेन्नामत्रयन्नित्यं महारोगनिवारणम् ॥

महादेव महादेव महादेव महादेव महादेव महादेव महादेव महादेव।
महादेव महादेव महादेव महादेव महादेव महादेव महादेव महादेव॥

# ॥ लिङ्गाष्टकम् ॥

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभासितशोभितलिङ्गम् ।
जन्मजदुःखविनाशकलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ १ ॥

देवमुनिप्रवरार्चितलिङ्गं कामदहं करुणाकरलिङ्गम् ।
रावणदर्पविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ २ ॥

सर्वसुगन्धिसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम् ।
सिद्धसुरासुरवन्दितलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ३ ॥

कनकमहामणिभूषितलिङ्गं फणिपतिवेष्टितशोभितलिङ्गम् ।
दक्षसुयज्ञविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ४ ॥

कुङ्कुमचन्दनलेपितलिङ्गं पङ्कजहारसुशोभितलिङ्गम् ।
सञ्चितपापविनाशनलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ५ ॥

देवगणार्चितसेवितलिङ्गं भावैर्भक्तिभिरेव च लिङ्गम् ।
दिनकरकोटिप्रभाकरलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ६ ॥

अष्टदलोपरिवेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशितलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ७ ॥

सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसदार्चितलिङ्गम् ।
परात्परं परमात्मकलिङ्गं तत् प्रणमामि सदाशिवलिङ्गम् ॥ ८ ॥

लिङ्गाष्टकमिदं पुण्यं यः पठेत् शिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥

# ॥ बिल्वाष्टकम् ॥

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रियायुधम् ।
त्रिजन्मपापसंहारं एकबिल्वं शिवार्पणम् ॥ १ ॥
त्रिशाखैः बिल्वपत्रैश्च ह्यच्छिद्रैः कोमलैः शुभैः ।
शिवपूजां करिष्यामि ह्येकबिल्वं शिवार्पणम् ॥ २ ॥
अखण्डबिल्वपत्रेण पूजिते नन्दिकेश्वरे ।
शुद्ध्यन्ति सर्वपापेभ्यो ह्येकबिल्वं शिवार्पणम् ॥ ३ ॥
शालिग्राम-शिलामेकां विप्राणां जातु चार्पयेत् ।
सोमयज्ञ-महापुण्यं एकबिल्वं शिवार्पणम् ॥ ४ ॥
दन्तिकोटि-सहस्राणि वाजपेय-शतानि च ।
कोटिकन्या-महादानं एकबिल्वं शिवार्पणम् ॥ ५ ॥
लक्ष्म्यास्तनुत उत्पन्नं महादेवस्य च प्रियम् ।
बिल्ववृक्षं प्रयच्छामि ह्येकबिल्वं शिवार्पणम् ॥ ६ ॥
दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम् ।
अघोरपापसंहारं एकबिल्वं शिवार्पणम् ॥ ७ ॥
काशीक्षेत्रनिवासं च कालभैरवदर्शनम् ।
प्रयागमाधवं दृष्ट्वा ह्येकबिल्वं शिवार्पणम् ॥ ८ ॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय ह्येकबिल्वं शिवार्पणम् ॥ ९ ॥
बिल्वाष्टकमिदं पुण्यं यः पठेत् शिवसन्निधौ ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥

॥ इति बिल्वाष्टकं सम्पूर्णम् ॥

# ॥ सदाशिवाष्टकम् ॥

पतञ्जलिरुवाच

सुवर्णपद्मिनी-तटान्त-दिव्यहर्म्य-वासिने
सुपर्णवाहन-प्रियाय सूर्यकोटि-तेजसे।
अपर्णया विहारिणे फणाधरेन्द्र-धारिणे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ १ ॥

सतुङ्ग-भङ्ग-जह्नुजा सुधांशु-खण्ड-मौळये
पतङ्ग-पङ्कजासुहृत्-कृपीटयोनि-चक्षुषे ।
भुजङ्गराज-मण्डलाय पुण्यशालि-बन्धवे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ २ ॥

चतुर्मुखाननारविन्द-वेदगीत-भूतये
चतुर्भुजानुजा-शरीर-शोभमान-मूर्तये ।
चतुर्विधार्थ-दान-शौण्ड-ताण्डव-स्वरूपिणे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ३ ॥

शरन्निशाकर-प्रकाश-मन्दहास मञ्जुला-
धरप्रवाळ-भासमान-वक्त्रमण्डल-श्रिये ।
करस्फुरत्-कपालमुक्तरक्त-विष्णुपालिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ४ ॥

सहस्त्र-पुण्डरीक-पूजनैक-शून्यदर्शनात्
सहस्त्रनेत्र-कल्पितार्चनाच्युताय भक्तितः।
सहस्त्रभानुमण्डल-प्रकाश-चक्रदायिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ५ ॥

रसारथाय रम्यपत्र-भृद्रथाङ्गपाणये
रसाधरेन्द्र-चापशिञ्जिनी-कृतानिलाशिने ।
स्वसारथी-कृताजनुन्न-वेदरूपवाजिने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ६ ॥

अति-प्रगल्भ-वीरभद्र-सिंहनाद-गर्जित
श्रुतिप्रभीत-दक्षयाग-भोगिनाक-सद्मनाम् ।
गतिप्रदाय गर्जिताखिल-प्रपञ्चसाक्षिणे
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ७ ॥

मृकण्डुसूनु रक्षणावधूतदण्ड-पाणये
सुगन्धमण्डल स्फुरत्प्रभाजितामृतांशवे ।
अखण्डभोग-सम्पदर्थलोक-भावितात्मने
सदा नमः शिवाय ते सदाशिवाय शम्भवे ॥ ८ ॥

मधुरिपु-विधि शक्र-मुख्य-देवैरपि नियमार्चित-पादपङ्कजाय ।
कनकगिरि-शरासनाय तुभ्यं रजत-सभापतये नमः शिवाय ॥ ९ ॥

हालास्यनाथाय महेश्वराय हालाहलालङ्कृत-कन्धराय ।
मीनेक्षणायाः पतये शिवाय नमो-नमस्सुन्दर-ताण्डवाय ॥ १० ॥

॥ इति श्री हालास्यमाहात्म्ये पतञ्जलिकृतं सदाशिवाष्टकं सम्पूर्णम् ॥

# ॥ दक्षिणामूर्तिस्तोत्रम् ॥

उपासकानां यदुपासनीयम्
उपात्तवासं वटशाखिमूले।
तद्धाम दाक्षिण्यजुषा स्वमूर्त्या
जागर्तु चित्ते मम बोधरूपम् ॥ १ ॥

अद्राक्षमक्षीणदयानिधानम्
आचार्यमाद्यं वटमूलभागे।
मौनेन मन्दस्मितभूषितेन
महर्षि लोकस्य तमो नुदन्तम् ॥ २ ॥

विद्रावितादोष-तमोगुणेन
मुद्राविशेषेण मुहुर्मुनीनाम् ।
निरस्य मायां दयया विधत्ते
देवो महांस्तत्त्वमसीति बोधम् ॥ ३ ॥

अपारकारुण्यसुधातरङ्गैः
अपाङ्गपातैरवलोकयन्तम् ।
कठोरसंसारनिदाघतप्तान्
मुनीनहं नौमि गुरुं गुरूणाम् ॥ ४ ॥

ममाद्यदेवो वटमूलवासी
कृपाविशेषात्कृतसन्निधानः।
ओंकाररूपामुपदिश्य विद्याम्
आविद्यकध्वान्तमपाकरोतु ॥ ५ ॥

कलाभिरिन्दोरिव कल्पिताङ्गं
मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेयम्
अनाद्यविद्यातिमिरप्रभातम् ॥६॥

स्वदक्षजानुस्थितवामपादम्
पादोदरालङ्कृतयोगपट्टम् ।
अपस्मृतेराहितपादमङ्गे
प्रणौमि देवं प्रणिधानवन्तम् ॥७॥

तत्त्वार्थमन्तेवसतामृषीणाम्
युवाऽपि यः सन्नुपदेष्टुमीष्टे।
प्रणौमि तं प्राक्तनपुण्यजालैः
आचार्यमाश्चर्यगुणाधिवासम् ॥८॥

एकेन मुद्रां परशुं करेण
करेण चान्येन मृगं दधानः।
स्वजानुविन्यस्तकरः पुरस्तात्
आचार्यचूडामणिराविरस्तु ॥९॥

आलेपवन्तं मदनाङ्गभूत्या
शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कञ्चनदेशिकेन्द्रम्
अज्ञानवाराकरबाडवाग्निम् ॥१०॥

चारुस्मितं सोमकलावतंसम्
वीणाधरं व्यक्तजटाकलापम् ।
उपासते केचन योगिनस्त्वाम्
उपात्तनादानुभवप्रमोदम् ॥ ११ ॥

उपासते यं मुनयः शुकाद्याः
निराशिषो निर्ममताधिवासाः ।
तं दक्षिणामूर्तितनुं महेशम्
उपास्महे मोहमहार्तिशान्त्यै ॥ १२ ॥

कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वसन्
कारुण्यामृतवारिभिर्मुनिजनं सम्भावयन् वीक्षितैः ।
मोहध्वान्तविभेदनं विरचयन् बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥ १३ ॥

अगौरगात्रैरललाटनेत्रैः
अशान्तवेषैरभुजङ्गभूषैः ।
अबोधमुद्रैरनपास्तनिद्रैः
अपूर्णकामैरमरैरलं नः ॥ १४ ॥

दैवतानि कति सन्ति चावनौ
नैव तानि मनसो मतानि मे ।
दीक्षितं जडधियामनुग्रहे
दक्षिणाभिमुखमेव दैवतम् ॥ १५ ॥

मुदिताय मुग्धशशिनावतंसिने
भसितावलेपरमणीयमूर्तये ।
जगदीन्द्रजालरचनापटीयसे
महसे नमोऽस्तु वटमूलवासिने ॥ १६ ॥

व्यालम्बिनीभिः परितो जटाभिः
कलावशेषेण कलाधरेण।
पश्यल्ललाटेन मुखेन्दुना च
प्रकाशसे चेतसि निर्मलानाम् ॥ १७ ॥

उपासकानां त्वमुमासहायः
पूर्णेन्दुभावं प्रकटीकरोषि।
यदद्य ते दर्शनमात्रतो मे
द्रवत्यहो मानसचन्द्रकान्तः ॥ १८ ॥

यस्ते प्रसन्नामनुसन्दधानो
मूर्तिं मुदा मुग्धशशाङ्कमौलेः।
ऐश्वर्यमायुर्लभते च विद्याम्
अन्ते च वेदान्तमहारहस्यम् ॥ १९ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्रीदक्षिणामूर्तिस्तोत्रं सम्पूर्णम् ॥

## ॥ शिवप्रातःस्मरणस्तोत्रम् ॥

प्रातः स्मरामि भवभीतिहरं सुरेशम्
गङ्गाधरं वृषभवाहनमम्बिकेशम् ।
खट्वाङ्गशूलवरदाभयहस्तमीशम्
संसाररोगहरमौषधमद्वितीयम् ॥ १ ॥

प्रातर्नमामि गिरिशं गिरिजार्धदेहम्
सर्गस्थितिप्रलयकारणमादिदेवम् ।
विश्वेश्वरं विजितविश्वमनोभिरामम्
संसाररोगहरमौषधमद्वितीयम् ॥ २ ॥
प्रातर्भजामि शिवमेकमनन्तमाद्यम्
वेदान्तवेद्यमनघं पुरुषं महान्तम् ।
नामादिभेदरहितं षड्भावशून्यम्
संसाररोगहरमौषधमद्वितीयम् ॥ ३ ॥
॥ इति शिवप्रातःस्मरणस्तोत्रं सम्पूर्णम् ॥

## ॥ शिवपञ्चाक्षरस्तोत्रम् ॥

नागेन्द्रहाराय त्रिलोचनाय
भस्माङ्गरागाय महेश्वराय।
नित्याय शुद्धाय दिगम्बराय
तस्मै नकाराय नमः शिवाय॥ १ ॥
मन्दाकिनी-सलिलचन्दन-चर्चिताय
नन्दीश्वर-प्रमथनाथ-महेश्वराय।
मन्दारपुष्प-बहुपुष्प-सुपूजिताय
तस्मै मकाराय नमः शिवाय॥ २ ॥
शिवाय गौरीवदनाब्ज-वृन्द-
सूर्याय दक्षाध्वरनाशकाय।
श्रीनीलकण्ठाय वृषध्वजाय
तस्मै शिकाराय नमः शिवाय॥ ३ ॥

वसिष्ठ-कुम्भोद्भव-गौतमार्य-
मुनीन्द्र-देवार्चितशेखराय ।
चन्द्रार्क-वैश्वानरलोचनाय
तस्मै वकाराय नमः शिवाय॥४॥

यक्षस्वरूपाय जटाधराय
पिनाकहस्ताय सनातनाय।
दिव्याय देवाय दिगम्बराय
तस्मै यकाराय नमः शिवाय॥५॥

पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते॥

॥इति श्रीमच्छङ्कराचार्यविरचितं शिवपञ्चाक्षरस्तोत्रं सम्पूर्णम्॥

## ॥उमामहेश्वरस्तोत्रम्॥

नमः शिवाभ्यां नवयौवनाभ्याम्
परस्पराश्लिष्टवपुर्धराभ्याम् ।
नागेन्द्रकन्यावृषकेतनाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥१॥

नमः शिवाभ्यां सरसोत्सवाभ्याम्
नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥२॥

नमः शिवाभ्यां वृषवाहनाभ्याम्
विरिञ्चिविष्ण्विन्द्रसुपूजिताभ्याम् ।
विभूतिपाटीरविलेपनाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥३॥

नमः शिवाभ्यां जगदीश्वराभ्याम्
जगत्पतिभ्यां जयविग्रहाभ्याम् ।
जम्भारिमुख्यैरभिवन्दिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥४॥

नमः शिवाभ्यां परमौषधाभ्याम्
पञ्चाक्षरी पञ्जररञ्जिताभ्याम् ।
प्रपञ्च-सृष्टि-स्थिति-संहृताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥५॥

नमः शिवाभ्यामतिसुन्दराभ्याम्
अत्यन्तमासक्तहृदम्बुजाभ्याम् ।
अशेषलोकैकहितङ्कराभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥६॥

नमः शिवाभ्यां कलिनाशनाभ्याम्
कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥७॥

नमः शिवाभ्यामशुभापहाभ्याम्
अशेषलोकैकविशेषिताभ्याम् ।
अकुण्ठिताभ्यां स्मृतिसम्भृताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥८॥

नमः शिवाभ्यां रथवाहनाभ्याम्
रवीन्दुवैश्वानरलोचनाभ्याम् ।
राका-शशाङ्काभ-मुखाम्बुजाभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥९॥

नमः शिवाभ्यां जटिलन्धरभ्याम्
जरामृतिभ्यां च विवर्जिताभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥१०॥

नमः शिवाभ्यां विषमेक्षणाभ्याम्
बिल्वच्छदामल्लिकदामभृद्भ्याम् ।
शोभावती शान्तवतीश्वराभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥११॥

नमः शिवाभ्यां पशुपालकाभ्याम्
जगत्रयीरक्षण-बद्धहृद्भ्याम् ।
समस्तदेवासुरपूजिताभ्याम्
नमो नमः शङ्करपार्वतीभ्याम् ॥१२॥

स्तोत्रं त्रिसन्ध्यं शिवपार्वतीभ्याम्
भक्त्या पठेद्-द्वादशकं नरो यः।
स सर्वसौभाग्य-फलानि भुङ्क्ते
शतायुरन्ते शिवलोकमेति॥ १३॥

॥इति श्रीमच्छङ्कराचार्यविरचितं श्री उमामहेश्वरस्तोत्रं सम्पूर्णम्॥

## ॥अर्धनारीश्वर अष्टकम्॥

चाम्पेयगौरार्ध-शरीरकायै
कर्पूरगौरार्ध-शरीरकाय ।
धम्मिल्लकायै च जटाधराय
नमः शिवायै च नमः शिवाय॥ १॥

कस्तूरिकाकुङ्कुमचर्चितायै
चितारजःपुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय
नमः शिवायै च नमः शिवाय॥ २॥

झणत्क्वणत्कङ्कण-नूपुरायै
पादाब्जराजत्-फणिनूपुराय ।
हेमाङ्गदायै च भुजङ्गदाय
नमः शिवायै च नमः शिवाय॥ ३॥

विशालनीलोत्पललोचनायै
विकासिपङ्केरुहलोचनाय ।
समेक्षणायै विषमेक्षणाय
नमः शिवायै च नमः शिवाय॥ ४॥

मन्दारमालाकलितालकायै
कपालमालाङ्कितकन्धराय ।
दिव्याम्बरायै च दिगम्बराय
नमः शिवायै च नमः शिवाय॥५॥

अम्भोधरश्यामलकुन्तलायै
तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय
नमः शिवायै च नमः शिवाय॥६॥

प्रपञ्चसृष्ट्युन्मुखलास्यकायै
समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे
नमः शिवायै च नमः शिवाय॥७॥

प्रदीप्तरत्नोज्ज्वलकुण्डलायै
स्फुरन्महापन्नगभूषणाय ।
शिवान्वितायै च शिवान्विताय
नमः शिवायै च नमः शिवाय॥८॥

एतद् पठेदष्टकमिष्टदं यो भक्त्या
स मान्यो भुवि दीर्घजीवी।
प्राप्नोति सौभाग्यमनन्तकालम्
भूयात् सदा तस्य समस्तसिद्धिः॥

॥इति श्रीमच्छङ्कराचार्यविरचितम् अर्धनारीश्वर अष्टकं सम्पूर्णम्॥

# ॥ शिवशिवास्तुतिः ॥

नमो नमस्ते गिरिशाय तुभ्यम्
नमो नमस्ते गिरिकन्यकायै।
नमो नमस्ते वृषभध्वजाय
सिंहध्वजायै च नमो नमस्ते ॥ १ ॥

नमो नमो भूतिविभूषणाय
नमो नमश्चन्दनरूषितायै।
नमो नमः फालविलोचनाय
नमो नमः पद्मविलोचनायै ॥ २ ॥

त्रिशूलहस्ताय नमो नमस्ते
नमो नमः पद्मलसत्करायै।
नमो नमो दिग्वसनाय तुभ्यम्
चित्राम्बरायै च नमो नमस्ते ॥ ३ ॥

चन्द्रावतंसाय नमो नमस्ते
नमोऽस्तु चन्द्राभरणाञ्चितायै।
नमः सुवर्णाङ्कितकुण्डलाय
नमोऽस्तु रत्नोज्ज्वलकुण्डलायै ॥ ४ ॥

नमोऽस्तु ताराग्रहमालिकाय
नमोऽस्तु हारान्वितकन्धरायै।
सुवर्णवर्णाय नमो नमस्ते
नमः सुवर्णाधिकसुन्दरायै ॥ ५ ॥

नमो नमस्ते त्रिपुरान्तकाय
नमो नमस्ते मधुनाशनायै।
नमो नमस्त्वन्धकसूदनाय
नमो नमः कैटभसूदनायै ॥६॥

नमो नमो ज्ञानमयाय नित्यम्
नमश्चिदानन्दघनप्रदायै ।
नमो जटाजूटविराजिताय
नमोऽस्तु वेणीफणिमण्डितायै ॥७॥

नमोऽस्तु कर्पूरसाकराय
नमो लसत्कुङ्कुममण्डितायै।
नमोऽस्तु बिल्वाम्रफलार्चिताय
नमोऽस्तु कुन्दप्रसवार्चितायै ॥८॥

नमो जगन्मण्डलमण्डनाय
नमो मणिभ्राजितमण्डनायै।
नमोऽस्तु वेदान्तगणस्तुताय
नमोऽस्तु विश्वेश्वरसंस्तुतायै ॥९॥

नमोऽस्तु सर्वामरपूजिताय
नमोऽस्तु पद्मार्चितपादुकायै।
नमः शिवालिङ्गितविग्रहाय
नमः शिवालिङ्गितविग्रहायै ॥१०॥

नमो नमस्ते जनकाय नित्यम्
नमो नमस्ते गिरिजे जनन्यै।
नमो नमोऽनङ्गहराय नित्यम्
नमो नमोऽनङ्गविवर्धनायै ॥ ११ ॥

नमो नमस्तेऽस्तु विषाशनाय
नमो नमस्तेऽस्तु सुधाशनायै।
नमो नमस्तेऽस्तु महेश्वराय
श्रीचन्दने देवि नमो नमस्ते ॥ १२ ॥

॥ इति श्रीमत्कार्तिकेयविरचितशिवशिवास्तुतिः सम्पूर्णः ॥



## ॥ ललिता पञ्चकम् ॥

प्रातः स्मरामि ललितावदनारविन्दम्
बिम्बाधरं पृथुलमौक्तिकशोभिनासम् ।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यम्
मन्दस्मितं मृगमदोज्ज्वलभालदेशम् ॥ १ ॥

प्रातर्भजामि ललिताभुजकल्पवल्लीम्
रत्नाङ्गुलीयलसदङ्गुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयाङ्गदशोभमानाम्
पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ॥ २ ॥

प्रातर्नमामि ललिताचरणारविन्दम्
भक्तेष्टदाननिरतं भवसिन्धुपोतम् ।
पद्मासनादिसुरनायकपूजनीयम्
पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ॥ ३ ॥

प्रातः स्तुवे परशिवां ललितां भवानीम्
त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टविलयस्थितिहेतुभूताम्
विश्वेश्वरीं निगमवाङ्ग्मनसातिदूराम् ॥ ४ ॥

प्रातर्वदामि ललिते तव पुण्यनाम
कामेश्वरीति कमलेति महेश्वरीति ।
श्रीशाम्भवीति जगतां जननी परेति
वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥ ५ ॥

यः श्लोकपञ्चकमिदं ललिताम्बिकायाः
सौभाग्यदं सुललितं पठति प्रभाते।
तस्मै ददाति ललिता झटिति प्रसन्ना
विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम् ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्री ललितापञ्चकं सम्पूर्णम् ॥

## ॥ श्यामळा दण्डकम् ॥

### ॥ ध्यानम् ॥

माणिक्यवीणामुपलालयन्तीम्
मदालसां मञ्जुळवाग्विलासाम् ।
माहेन्द्रनीलद्युतिकोमलाङ्गीम्
मातङ्गकन्यां मनसा स्मरामि ॥ १ ॥

चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥ २ ॥

### ॥ विनियोगः ॥

माता मरकतश्यामा मातङ्गी मदशालिनी।
कुर्यात् कटाक्षं कल्याणी कदम्बवनवासिनी ॥

### ॥ स्तुतिः ॥

जय मातङ्गतनये जय नीलोत्पलद्युते।
जय सङ्गीतरसिके जय लीलाशुकप्रिये ॥

## ॥ दण्डकम् ॥

जय जननि सुधासमुद्रान्-तरुद्यन्-
मणिद्वीप-संरूढ-बिल्वाटवी-मध्य-
कल्प-द्रुमाकल्प-कादम्ब-कान्तार-
वासप्रिये कृत्तिवासप्रिये
सर्वलोकप्रिये

सादरारब्ध-सङ्गीत-सम्भावना-
सम्भ्रमालोल-नीपस्रगाबद्ध-
चूळीसनाथत्रिके सानुमत्पुत्रिके

शेखरीभूत-शीतांशुरेखा-मयूखावली-
बद्ध-सुस्निग्ध-नीलालकश्रेणि-
शृङ्गारिते लोकसम्भाविते

कामलीला-धनुस्सन्निभ-भ्रूलता-पुष्प-
सन्दोह-सन्देह-कृल्लोचने वाक्सुधासेचने

चारुगोरोचनापङ्क-केळीलला-
माभिरामे सुरामे रमे

प्रोल्लसद्धू-वाळिका-मौक्तिकश्रेणिका-
चन्द्रिका-मण्डलोद्भासि-
गण्डस्थलन्यस्त-कस्तूरिका-
पत्ररेखा- समुद्भूत-सौरभ्य-सम्भ्रान्त-
भृङ्गाङ्गनागीत-सान्द्रीभवन्-
मन्द्रतन्त्रीस्वरे सुस्वरे भास्वरे

वल्लकी-वादन-प्रक्रिया-लोल-
ताळीदळाबद्ध-ताटङ्क-
भूषाविशेषान्विते सिद्ध-सम्मानिते

दिव्यहालाम-दोद्वेलहेलाल-
सच्चक्षुरान्दोळन-श्रीसमाक्षिप्त-कर्णैक-
नीलोत्पले श्यामळे पूरिताशेष-
लोकाभि-वाञ्छाफले श्रीफले

स्वेद-बिन्दूल्लसद्-भाल-लावण्य-
निष्यन्द-सन्दोह-सन्देह-कृन्नासिका-
मौक्तिके सर्वमन्त्रात्मिके काळिके

मुग्द्ध-मन्दस्मितो-दारवक्रस्फुरत्-
पूग-कर्पूर-ताम्बूल-खण्डोत्करे
ज्ञानमुद्राकरे सर्वसम्पत्करे
पद्मभास्वत्करे श्रीकरे

कुन्द-पुष्पद्युतिस्निग्ध-दन्तावली-
निर्मलालोल-कल्लोल-सम्मेळ-
नस्मेरशोणाधरे चारुवीणाधरे
पक्वबिम्बाधरे

सुललित-नवयौवनारम्भ-
चन्द्रोदयोद्वेल-लावण्य-
दुग्धार्णवाविर्भवत्कम्बु-बिम्बोक-
भृत्कन्थरे सत्कला-मन्दिरे मन्थरे

दिव्य-रत्नप्रभा-बन्धुरच्छन्न-हारादि-
भूषा-समुद्योतमाना-
नवद्याङ्गशोभे शुभे

रत्न-केयूर-रश्मिच्छटा-पल्लव-
प्रोल्लसद्-दोल्लता-राजिते
योगिभिः पूजिते

विश्व-दिङ्मण्डलव्याप्त-माणिक्य-
तेजस्स्फुरत्-कङ्कणालङ्कृते
विभ्रमालङ्कृते साधुभिः सत्कृते

वासरारम्भ-वेळा-समुज्जृम्भ-
माणारविन्द-प्रतिद्वन्द्वि-पाणिद्वये
सन्ततोद्यद्दये अद्वये

दिव्य-रत्नोर्मिका-दीधिति-स्तोम-
सन्ध्यायमा-नाङ्गुळी-पल्लवोद्यन्न-
खेन्दु-प्रभा-मण्डले सन्नुताखण्डले
चित्प्रभामण्डले प्रोल्लसत्कुण्डले

तारकाराजि-नीकाश-हारावलिस्मेर-
चारुस्तना-भोगभारानमन्मध्य-
वल्लीवलिच्छेद-वीची-समुद्यत्-
समुल्लास-सन्दर्शिताकार-सौन्दर्य-
रत्नाकरे वल्लकी-भृत्करे किङ्कर-श्रीकरे

हेम-कुम्भोप-मोत्तुङ्ग-
वक्षोजभारावनम्रे त्रिलोकावनम्रे

लसद्वृत्त-गम्भीर-नाभी-सरस्तीर-
शैवाल-शङ्काकर-श्यामरोमावली-
भूषणे मञ्जुसम्भाषणे

चारुशिञ्चत्कटीसूत्र-निर्भत्सितानङ्ग-
लीला-धनुश्शिञ्चिनी-डम्बरे
दिव्यरत्नाम्बरे

पद्मरागोल्लसन्-मेखला-भास्वर-
श्रोणि- शोभाजित-स्वर्ण-भूभृत्तले
चन्द्रिका-शीतले

विकसित-नवकिंशुकाताम्र-दिव्यांशु-
कच्छन्न-चारूरु-शोभा-पराभूत-
सिन्दूर-शोणाय-मानेन्द्र-मातङ्ग-
हस्मार्ग्गळे वैभवानर्ग्गळे श्यामळे

कोमळस्निग्ध-नीलोत्पलोत्-
पादितानङ्ग-तूणीर-शङ्काकरोदाम-
जङ्घालते चारुलीलागते

नम्र-दिक्पाल-सीमन्तिनी
कुन्तळस्निग्ध-नीलप्रभा-पुञ्जसञ्जात-
दुर्वाङ्कु-राशङ्क-सारङ्ग-संयोग-
रिङ्खन्न-खेन्दूज्ज्वले प्रोज्ज्वले निर्मले

ब्रह्मदेवेश-लक्ष्मीश-भूतेश-तोयेश-
वागीश-कीनाश-दैत्येश-यक्षेश-
वाय्वग्नि-माणिक्य-संहृष्ट-कोटीर-
बाला-तपोद्दामलाक्षा-रसारुण्य-
तारुण्य-लक्ष्मी-गृहीताङ्घ्रि-पद्मे
सुपद्मे उमे

सूरुचिर-नवरत्न-पीठस्थिते
सुस्थिते रत्नपद्मासने रत्नसिंहासने
शङ्खपद्मद्वयोपाश्रिते विश्रिते
तत्र विघ्नेश-दुर्गावटु-क्षेत्रपालैर्युते
मत्तमातङ्ग-कन्या-समूहान्विते

मञ्जुळामेनकाद्यङ्गनामानिते
भैरवैरष्टभिर्वेष्टिते
देवि वामादिभिः शक्तिभिः
सेविते धात्रि-लक्ष्म्यादि-शक्त्यष्टकैः
संयुते मातृकामण्डलैर्मण्डिते

यक्ष-गन्धर्व-सिद्धाङ्गना-मण्डलैरर्चिते
पञ्चबाणात्मिके
पञ्चबाणेन रत्या च सम्भाविते
प्रीतिभाजा वसन्तेन चानन्दिते

भक्तिभाजां परं श्रेयसे कल्पसे
योगिनां मानसे द्योतसे
छन्दसामोजसा भ्राजसे
गीत-विद्या-विनोदादि
तृष्णेन कृष्णेन सम्पूज्यसे
भक्तिमच्चेतसा वेधसा स्तूयसे
विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे

श्रवणहरदक्षिणक्काणया वीणया
किन्नरैर्गीयसे
यक्षगन्धर्व-सिद्धाङ्गना-मण्डलैरर्च्यसे

सर्वसौभाग्य-वाञ्छावतीभिर्-
वधूभिस्सुराणां समाराध्यसे
सर्वविद्याविशेषत्मकं चाटुगाथा-
समुच्चारणा-कण्ठ-मूलोल-
सद्वर्णराजित्रयं कोमळश्यामळो-
दारपक्षद्वयं
तुण्डशोभाति-धूरीभवत् किंशुकाभं
तं शुकं लालयन्ती परिक्रीडसे

पाणिपद्मद्वयेना-क्षमालामपि स्फाटिकीं
ज्ञानसारात्मकं पुस्तकञ्चापरेणाङ्कुशं
पाशमाबिभ्रति येन सञ्चिन्त्यसे चेतसा
तस्य वक्त्रान्तरात् गद्यपद्यात्मिका
भारती निस्सरेत्

येन वा यावका भाकृतिर्भाव्यसे
तस्य वश्या भवन्ति स्त्रियः पूरुषाः
येन वा शातकुम्भद्युतिर्भाव्यसे
सोऽपि लक्ष्मीसहस्रैः परिक्रीडते

किन्न सिद्ध्येद्वपुः श्यामळं कोमळं
चन्द्र-चूडान्वितं तावकं ध्यायतः
तस्य लीला सरोवारिधिः
तस्य केळीवनं नन्दनं
तस्य भद्रासनं भूतलं
तस्य गीर्देवता किङ्करी
तस्य चाऽऽज्ञाकरी श्री स्वयम्

सर्वतीर्थात्मिके सर्वमन्त्रात्मिके सर्वतन्त्रात्मिके सर्वयन्त्रात्मिके
सर्वपीठात्मिके सर्वसत्त्वात्मिके सर्वशक्त्यात्मिके
सर्वविद्यात्मिके सर्वयोगात्मिके सर्वरागात्मिके
सर्वशब्दात्मिके सर्ववर्णात्मिके सर्वविश्वात्मिके सर्वगे
हे जगन्मातृके पाहि मां पाहि मां पाहि माम्
देवि तुभ्यं नमो देवि तुभ्यं नमो देवि तुभ्यं नमः
॥ इति महाकवि कालिदासविरचितं श्यामळा दण्डकं सम्पूर्णम् ॥

# ॥ मीनाक्षी पञ्चरत्नम् ॥

उद्यद्भानु सहस्रकोटिसदृशां केयूरहारोज्ज्वलाम्
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालङ्कृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्वस्वरूपां शिवाम्
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारान्निधिम् ॥ १ ॥

मुक्ताहारलसत्किरीटरुचिरां पूर्णेन्दुवक्त्रप्रभाम्
शिञ्जन्नूपुरकिङ्किणीमणिधरां पद्मप्रभाभासुराम् ।
सर्वाभीष्टफलप्रदां गिरिसुतां वाणीरमासेविताम्
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारान्निधिम् ॥ २ ॥

श्रीविद्यां शिववामभागनिलयां ह्रींकारमन्त्रोज्ज्वलाम्
श्रीचक्राङ्कित बिन्दुमध्यवसतिं श्रीमत्सभानायकीम् ।
श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीम्
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारान्निधिम् ॥ ३ ॥

श्रीमत्सुन्दरनायकीं भयहरां ज्ञानप्रदां निर्मलाम्
श्यामाभां कमलासनार्चितपदां नारायणस्यानुजाम् ।
वीणावेणुमृदङ्गवाद्यरसिकां नानाविधाडाम्बिकाम्
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारान्निधिम् ॥ ४ ॥

नानायोगिमुनीन्द्रहृन्निवसतीं नानार्थसिद्धिप्रदाम्
नानापुष्पविराजिताङ्घ्रियुगलां नारायणेनार्चिताम् ।
नादब्रह्ममयीं परात्परतरां नानार्थतत्वात्मिकाम्
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारान्निधिम् ॥ ५ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं मीनाक्षी-पञ्चरत्नं सम्पूर्णम् ॥

# ॥ महिषासुरमर्दिनि स्तोत्रम् ॥

अयि गिरिनन्दिनि नन्दितमेदिनि विश्वविनोदिनि नन्दनुते
गिरिवर-विन्ध्य-शिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते।
भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १ ॥

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शङ्करतोषिणि किल्बिषमोषिणि घोषरते।
दनुज-निरोषिणि दितिसुत-रोषिणि दुर्मद-शोषिणि सिन्धुसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २ ॥

अयि जगदम्ब-मदम्ब-कदम्ब-वनप्रिय-वासिनि हासरते
शिखरि शिरोमणि तुङ्ग-हिमालय-शृङ्ग-निजालय-मध्यगते।
मधु-मधुरे मधु-कैटभ-गञ्जिनि कैटभ-भञ्जिनि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ३ ॥

अयि शतखण्ड-विखण्डित-रुण्ड-वितुण्डित-शुण्ड-गजाधिपते
रिपु-गज-गण्ड-विदारण-चण्ड-पराक्रम-शुण्ड-मृगाधिपते।
निज-भुज-दण्ड-निपातित-खण्ड-विपातित-मुण्ड-भटाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ४ ॥

अयि रण-दुर्मद-शत्रु-वधोदित-दुर्धर-निर्जर-शक्तिभृते
चतुर-विचार-धुरीण-महाशिव-दूतकृत-प्रमथाधिपते।
दुरित-दुरीह-दुराशय-दुर्मति-दानवदूत-कृतान्तमते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ५ ॥

अयि शरणागत-वैरि-वधूवर-वीर-वराभय-दायकरे
त्रिभुवन-मस्तक-शूल-विरोधि शिरोधि कृतामल-शूलकरे।
दुमिदुमि-तामर-दुन्दुभिनाद-महो-मुखरीकृत-तिग्मकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥६॥

अयि निज-हुङ्कृति मात्र-निराकृत-धूम्रविलोचन-धूम्रशते
समर-विशोषित-शोणित-बीज-समुद्भव-शोणित-बीजलते।
शिव-शिव-शुम्भ-निशुम्भ-महाहव-तर्पित-भूत-पिशाचरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥७॥

धनुरनु-सङ्ग-रणक्षणसङ्ग-परिस्फुर-दङ्ग-नटत्कटके
कनक-पिशङ्ग-पृषत्क-निषङ्ग-रसद्भट-शृङ्ग-हतावटुके।
कृत-चतुरङ्ग-बलक्षिति-रङ्ग-घटद्बहुरङ्ग-रटद्बटुके
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥८॥

जय जय जप्य-जयेजय-शब्द-परस्तुति-तत्पर-विश्वनुते
भण-भण-भिञ्जिमि-भिङ्कृत-नूपुर-सिञ्जित-मोहित-भूतपते।
नटित-नटार्ध-नटीनट-नायक-नाटित-नाट्य-सुगानरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥९॥

अयि सुमनः सुमनः सुमनः सुमनः सुमनोहर-कान्तियुते
श्रित-रजनी-रजनी-रजनी-रजनी-रजनीकर-वक्त्रवृते।
सुनयन-विभ्रमर-भ्रमर-भ्रमर-भ्रमर-भ्रमराधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥१०॥

सहित-महाहव-मल्लम-तल्लिक-मल्लित-रल्लक-मल्लरते
विरचित-वल्लिक-पल्लिक-मल्लिक-भिल्लिक-भिल्लिक-वर्गवृते।
सितकृत-फुल्लसमुल्ल-सितारुण-तल्लज-पल्लव-सल्ललिते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥ ११॥

अविरल-गण्ड-गलन्मद-मेदुर-मत्त-मतङ्गज-राजपते
त्रिभुवन-भूषण-भूत-कलानिधि रूप-पयोनिधि राजसुते।
अयि सुद-तीजन-लालसमानस-मोहन-मन्मथ-राजसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥ १२॥

कमल-दलामल-कोमल-कान्ति कलाकलितामल-भाललते
सकल-विलास-कलानिलयक्रम-केलि-चलत्कल-हंसकुले।
अलिकुल-सङ्कुल-कुवलय-मण्डल-मौलिमिलद्बकुलालि-कुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥ १३॥

करमुरली-रव-वीजित-कूजित-लज्जित-कोकिल-मञ्जुमते
मिलित-पुलिन्द-मनोहर-गुञ्जित-रञ्जितशैल-निकुञ्जगते।
निजगुणभूत-महाशबरीगण-सद्गुण-सम्भृत-केलितले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥ १४॥

कटितट-पीत-दुकूल-विचित्र-मयूख-तिरस्कृत-चन्द्ररुचे
प्रणत-सुरासुर-मौलिमणिस्फुर-दंशुल-सन्नख-चन्द्ररुचे।
जित-कनकाचल-मौलिपदोर्जित-निर्भर-कुञ्जर-कुम्भकुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते॥ १५॥

विजित-सहस्रकरैक-सहस्रकरैक-सहस्रकरैकनुते
कृतसुरतारक-सङ्गरतारक-सङ्गरतारक-सूनुसुते ।
सुरथ-समाधि समानसमाधि समाधिसमाधि सुजातरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १६ ॥

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं स शिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव पदमेव परम्पदमित्यनुशीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १७ ॥

कनकलसत्कल-सिन्धुजलैरनुसिञ्चिनुते गुण-रङ्गभुवम्
भजति स किं न शचीकुच-कुम्भ-तटी-परिरम्भ-सुखानुभवम् ।
तव चरणं शरणं करवाणि नतामरवाणि निवासि शिवम्
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १८ ॥

तव विमलेन्दुकुलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरुहूत-पुरीन्दुमुखी-सुमुखीभिरसौ विमुखी क्रियते ।
मम तु मतं शिवनामधने भवती कृपया किमुत क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ १९ ॥

अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननी कृपयाऽसि यथाऽसि तथाऽनुमितासिरते ।
यदुचितमत्र भवत्पुररि कुरुतादुरुतापमपाकुरुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २० ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं
श्रीमहिषासुरमर्दिनि-स्तोत्रं सम्पूर्णम् ॥

## ॥ शीतलाष्टकम् ॥

अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः।
अनुष्टुप् छन्दः। शीतला देवता। लक्ष्मीर्बीजम्।
भवानी शक्तिः। सर्वविस्फोटकनिवृत्यर्थे जपे विनियोगः॥

ईश्वर उवाच

वन्देऽहं शीतलां देवीं रासभस्थां दिगम्बराम् ।
मार्जनीकलशोपेतां शूर्पालङ्कृतमस्तकाम् ॥ १ ॥

वन्देऽहं शीतलां देवीं सर्वरोगभयापहाम् ।
यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥

शीतले शीतले चेति यो ब्रूयद्दाहपीडितः।
विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति॥ ३ ॥

यस्त्वामुदकमध्ये तु ध्यात्वा सम्पूजयेन्नरः।
विस्फोटकभयं घोरं गृहे तस्य न जायते॥ ४ ॥

शीतले ज्वरदग्धस्य पूतिगन्धयुतस्य च।
प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥

शीतले तनुजान् रोगान् नृणां हरसि दुस्त्यजान् ।
विस्फोटकविदीर्णानां त्वमेकाऽमृतवर्षिणी॥ ६ ॥

गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् ।
त्वदनुध्यानमात्रेण शीतले यान्ति सङ्क्षयम् ॥ ७ ॥

न मन्त्रो नौषधं तस्य पापरोगस्य विद्यते।
त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥

मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् ।
यस्त्वां सञ्चिन्तयेद्देवि तस्य मृत्युर्न जायते ॥९॥

अष्टकं शीतलादेव्या यो नरः प्रपठेत्सदा।
विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥

श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः।
उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥

शीतले त्वं जगन्माता शीतले त्वं जगत्पिता।
शीतले त्वं जगद्धात्री शीतलायै नमो नमः ॥ १२ ॥

रासभो गर्दभश्चैव खरो वैशाखनन्दनः।
शीतलावाहनश्चैव दूर्वाकन्दनिकृन्तनः ॥ १३ ॥

एतानि खरनामानि शीतलाग्रे तु यः पठेत् ।
तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥ १४ ॥

शीतलाष्टकमेवेदं न देयं यस्यकस्यचित् ।
दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥

॥ इति श्रीस्कान्दपुराणे शीतलाष्टकं सम्पूर्णम् ॥

## ॥ अन्नपूर्णास्तोत्रम् ॥

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ १ ॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्-वक्षोजकुम्भान्तरी।
काश्मीरागरुवासिता रुचिकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ २॥

योगानन्दकरी रिपुक्षयकरी धर्मैकनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी।
सर्वैश्वर्यकरी तपः फलकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ३॥

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओङ्कारबीजाक्षरी।
मोक्षद्वारकवाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ४॥

दृश्यादृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रखेलनकरी विज्ञानदीपाङ्कुरी।
श्रीविश्वेशमनः प्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ५॥

आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरा त्रिपुरेश्वरी त्रिनयनी विश्वेश्वरी शर्वरी।
स्वर्गद्वारकवाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ६॥

उर्वी सर्वजनेश्वरी जयकरी माता कृपासागरी
वेणीनीलसमानकुन्तलधरी नित्यान्नदानेश्वरी।
साक्षान्मोक्षकरी सदा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ७॥

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामे स्वादुपयोधरा प्रियकरी सौभाग्यमाहेश्वरी।
भक्ताभीष्टकरी सदा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ८॥

चन्द्रार्कानलकोटिकोटिसदृशी चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुण्डलधरी चन्द्रार्कवर्णेश्वरी।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ ९॥

क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी
सर्वानन्दकरी सदा शिवकरी विश्वेश्वरी श्रीधरी।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी॥ १०॥

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति॥

माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं अन्नपूर्णास्तोत्रं सम्पूर्णम्॥

# ॥ षष्ठीदेवी स्तोत्रम् ॥

## प्रियव्रत उवाच

नमो देव्यै महादेव्यै सिद्ध्यै शान्त्यै नमो नमः।
शुभायै देवसेनायै षष्ठीदेव्यै नमो नमः ॥ १ ॥

वरदायै पुत्रदायै धनदायै नमो नमः।
सुखदायै मोक्षदायै षष्ठीदेव्यै नमो नमः ॥ २ ॥

शक्तेः षष्ठांशरूपायै सिद्धायै च नमो नमः।
मायायै सिद्धयोगिन्यै षष्ठीदेव्यै नमो नमः ॥ ३ ॥

पारायै पारदायै च षष्ठीदेव्यै नमो नमः।
सारायै सारदायै च पारायै सर्वकर्मणाम् ॥ ४ ॥

बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै नमो नमः।

कल्याणदायै कल्याण्यै फलदायै च कर्मणाम् ।
प्रत्यक्षायै च भक्तानां षष्ठीदेव्यै नमो नमः ॥ ५ ॥

पूज्यायै स्कन्दकान्तायै सर्वेषां सर्वकर्मसु।
देवरक्षणकारिण्यै षष्ठीदेव्यै नमो नमः ॥ ६ ॥

शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा।
हिंसाक्रोधैर्वर्जितायै षष्ठीदेव्यै नमो नमः ॥ ७ ॥

धनं देहि प्रियां देहि पुत्रं देहि सुरेश्वरि।
धर्मं देहि यशो देहि षष्ठीदेव्यै नमो नमः ॥ ८ ॥

भूमिं देहि प्रजां देहि देहि विद्यां सुपूजिते।
कल्याणं च जयं देहि षष्ठीदेव्यै नमो नमः ॥ ९ ॥

इति देवीं च संस्तूय लेभे पुत्रं प्रियव्रतः।
यशस्विनं च राजेन्द्रं षष्ठीदेवीप्रसादतः॥ १०॥

षष्ठीस्तोत्रमिदं ब्रह्मण् यः श्रृणोति च वत्सरम् ।
अपुत्रो लभते पुत्रं वरं सुचिरजीवनम् ॥ ११॥

वर्षमेकं च या भक्त्या संयतेदं श्रृणोति च।
सर्वपापाद्विनिर्मुक्ता महावन्ध्या प्रसूयते॥ १२॥

वीरपुत्रं च गुणिनं विद्यावन्तं यशस्विनम् ।
सुचिरायुष्मन्तमेव षष्ठीमातृप्रसादतः॥ १३॥

॥ इति श्रीब्रह्मवैवर्तपुराणे श्रीप्रियव्रतरचितं
षष्ठीदेवीस्तोत्रं सम्पूर्णम्॥

## ॥ दुर्गा पञ्चरत्नम्॥

ते ध्यान-योगानुगता अपश्यन्
त्वामेव देवीं स्वगुणैर्निगूढाम् ।
त्वमेव शक्तिः परमेश्वरस्य
मां पाहि सर्वेश्वरि मोक्षदात्रि॥ १॥

देवात्मशक्तिः श्रुतिवाक्यगीता
महर्षि लोकस्य पुरः प्रसन्ना।
गुहा परं व्योम सतः प्रतिष्ठा
मां पाहि सर्वेश्वरि मोक्षदात्रि॥ २॥

परास्य शक्तिः विविधैव श्रूयसे
श्वेताश्व-वाक्योदित-देवि दुर्गे।
स्वाभाविकी ज्ञानबलक्रिया ते
मां पाहि सर्वेश्वरि मोक्षदात्रि॥ ३॥

देवात्मशब्देन शिवात्मभूता
यत्कूर्मवायव्यवचो विवृत्या।
त्वं पाशविच्छेदकरी प्रसिद्धा
मां पाहि सर्वेश्वरि मोक्षदात्रि॥ ४॥

त्वं ब्रह्मपुच्छा विविधा मयूरी
ब्रह्म-प्रतिष्ठाऽस्युपदिष्ट-गीता।
ज्ञानस्वरूपात्मतयाऽखिलानाम्
मां पाहि सर्वेश्वरि मोक्षदात्रि॥ ५॥

॥ इति श्री काञ्चीपुरजगद्गुरुणा श्रीमच्चन्द्रशेखरेन्द्र-सरस्वती-स्वामिना विरचितं श्री दुर्गा-पञ्चरत्नं सम्पूर्णम्॥



## ॥ रुक्मिणीकृत गौरीस्तोत्रम्॥

नमस्ये त्वामम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥



# ॥ दुर्गाष्टोत्तर शतनामस्तोत्रम् ॥

## ॥ न्यासः ॥

अस्य श्रीदुर्गाष्टोत्तर शतनामास्तोत्रमालामन्त्रस्य
महाविष्णुमहेश्वराः ऋषयः। अनुष्टुप् छन्दः।
श्रीदुर्गापरमेश्वरी देवता।
ह्रां बीजम्। ह्रीं शक्तिः। ह्रूं कीलकम्।
सर्वाभीष्टसिद्ध्यर्थे जपहोमार्चने विनियोगः।

## ॥ स्तोत्रम् ॥

सत्या साध्या भवप्रीता भवानी भवमोचनी।
आर्या दुर्गा जया चऽऽध्या त्रिनेत्रा शूलधारिणी ॥ १ ॥

पिनाकधारिणी चित्रा चण्डघण्टा महातपाः।
मनो बुद्धिरहङ्कारा चिद्रूपा च चिदाकृतिः ॥ २ ॥

अनन्ता भाविनी भव्या ह्यभव्या च सदागतिः।
शाम्भवी देवमाता च चिन्ता रत्नप्रिया तथा ॥ ३ ॥

सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी।
अपर्णाऽनेकवर्णा च पाटला पाटलावती ॥ ४ ॥

पट्टाम्बरपरीधाना कलमञ्जीररञ्जिनी।
ईशानी च महाराज्ञी ह्यप्रमेयपराक्रमा ॥ ५ ॥

रुद्राणी क्रूररूपा च सुन्दरी सुरसुन्दरी।
वनदुर्गा च मातङ्गी मतङ्गमुनिकन्यका ॥ ६ ॥

ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः॥७॥

विमला ज्ञानरूपा च क्रिया नित्या च बुद्धिदा।
बहुला बहुलप्रेमा महिषासुरमर्दिनी॥८॥

मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी।
सर्वशास्त्रमयी चैव सर्वदानवघातिनी॥९॥

अनेकशस्त्रहस्ता च सर्वशस्त्रास्त्रधारिणी।
भद्रकाली सदाकन्या कैशोरी युवतिर्यतिः॥१०॥

प्रौढाऽप्रौढा वृद्धमाता घोररूपा महोदरी।
बलप्रदा घोररूपा महोत्साहा महाबला॥११॥

अग्निज्वाला रौद्रमुखी कालरात्री तपस्विनी।
नारायणी महादेवी विष्णुमाया शिवात्मिका॥१२॥

शिवदूती कराली च ह्यनन्ता परमेश्वरी।
कात्यायनी महाविद्या महामेधास्वरूपिणी॥१३॥

गौरी सरस्वती चैव सावित्री ब्रह्मवादिनी।
सर्वतत्त्वैकनिलया वेदमन्त्रस्वरूपिणी॥१४॥

॥फलश्रुतिः॥

इदं स्तोत्रं महादेव्याः नाम्नाम् अष्टोत्तरं शतम्।
यः पठेत् प्रयतो नित्यं भक्तिभावेन चेतसा॥१५॥

शत्रुभ्यो न भयं तस्य तस्य शत्रुक्षयं भवेत्।
सर्वदुःखदरिद्राच्च सुसुखं मुच्यते ध्रुवम्॥१६॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
कन्यार्थी लभते कन्यां कन्या च लभते वरम् ॥ १७॥

ऋणी ऋणात् विमुच्येत ह्यपुत्रो लभते सुतम् ।
रोगाद्विमुच्यते रोगी सुखमत्यन्तमश्नुते ॥ १८॥

भूमिलाभो भवेत् तस्य सर्वत्र विजयी भवेत् ।
सर्वान् कामानवाप्नोति महादेवीप्रसादतः ॥ १९॥

कुङ्कुमैः बिल्वपत्रैश्च सुगन्धैः रक्तपुष्पकैः ।
रक्तपत्रैर्विशेषेण पूजयन् भद्रमश्नुते ॥ २०॥

॥ इति दुर्गाष्टोत्तर शतनामस्तोत्रं सम्पूर्णम् ॥



# ॥ कनकधारास्तवम् ॥

अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ १ ॥

मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि।
माला दृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसम्भवायाः ॥ २ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्दम्
आनन्दकन्दमनिमेषमनङ्गतन्त्रम् ।
आकेकरस्थितकनीनिकपक्ष्मनेत्रम्
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ३ ॥

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ॥ ४ ॥

कालाम्बुदालिललितोरसि कैटभारेः
धाराधरे स्फुरति या तडिदङ्गनेव।
मातुस्समस्तजगतां महनीयमूर्तिः
भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ५ ॥

प्राप्तं पदं प्रथमतः खलु यत्प्रभावात्
माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थरमीक्षणार्धम्
मन्दालसं च मकरालयकन्यकायाः ॥ ६ ॥

विश्वामरेन्द्रपदवीभ्रमदानदक्षम्
आनन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्षणमीक्षणार्द्धम्
इन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥

इष्टा विशिष्टमतयोऽपि यया दयार्द्र-
दृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टाम्
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ८ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधाराम्
अस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्ममपनीय चिराय दूरम्
नारायणप्रणयिनीनयनाम्बुवाहः ॥ ९ ॥

गीर्देवतेति गरुडध्वजसुन्दरीति
शाकम्बरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थिता या
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥

नमोऽस्तु नालीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूम्यै।
नमोऽस्तु सोमामृतसोदरायै
नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥

नमोऽस्तु हेमाम्बुजपीठिकायै
नमोऽस्तु भूमण्डलनायिकायै।
नमोऽस्तु देवादिदयापरायै
नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥

नमोऽस्तु देव्यै भृगुनन्दनायै
नमोऽस्तु विष्णोरुरसि स्थितायै।
नमोऽस्तु लक्ष्म्यै कमलालयायै
नमोऽस्तु दामोदरवल्लभायै ॥ १४ ॥

नमोऽस्तु कान्त्यै कमलेक्षणायै
नमोऽस्तु भूत्यै भुवनप्रसूत्यै।
नमोऽस्तु देवादिभिरर्चितायै
नमोऽस्तु नन्दात्मजवल्लभायै ॥ १५ ॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानविभवानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु मान्ये ॥ १६ ॥

यत्कटाक्षसमुपासनाविधिः
सेवकस्य सकलार्थसम्पदः।
सन्तनोति वचनाङ्गमानसैः
त्वां मुरारिहृदयेश्वरीं भजे ॥ १७ ॥

सरसिजनिलये सरोजहस्ते
धवळतमांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १८ ॥

दिग्घस्तिभिः कनककुम्भमुखावसृष्ट
स्वर्वाहिनी विमलचारुजलाप्लुताङ्गीम् ।
प्रातर्नमामि जगतां जननीमशेष
लोकाधिनाथगृहिणीममृताब्धिपुत्रीम् ॥ १९ ॥

कमले कमलाक्षवल्लभे त्वं
करुणापूरतरङ्गितैरपाङ्गैः ।
अवलोकय मामकिञ्चनानां
प्रथमं पात्रमकृत्रिमं दयायाः ॥ २० ॥

स्तुवन्ति ये स्तुतिभिरमीभिरन्वहम्
त्रयीमयीं त्रिभुवनमातरं रमाम् ।
गुणाधिका गुरुतरभाग्यभागिनो
भवन्ति ते भुवि बुधभाविताशयाः ॥ २१ ॥

देवि प्रसीद जगदीश्वरि लोकमातः
कल्याणगात्रि कमलेक्षणजीवनाथे।
दारिद्र्यभीतिहृदयं शरणागतं माम्
आलोकय प्रतिदिनं सदयैरपाङ्गैः ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्री कनकधारास्तवं सम्पूर्णम् ॥

## ॥ महालक्ष्म्यष्टकम् ॥

इन्द्र उवाच

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥ १ ॥

नमस्ते गरुडारूढे कोलासुरभयङ्करि।
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥ २ ॥

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि।
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते ॥ ३ ॥

सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि।
मन्त्रपूते सदा देवि महालक्ष्मि नमोऽस्तु ते ॥ ४ ॥

आद्यन्तरहिते देवि आद्यशक्तिमहेश्वरि।
योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते ॥ ५ ॥

स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे।
महापापहरे देवि महालक्ष्मि नमोऽस्तु ते॥ ६॥
पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते॥ ७॥
श्वेताम्बरधरे देवि नानालङ्कारभूषिते।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते॥ ८॥
महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान्नरः।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा॥
एककाले पठेन्नित्यं महापापविनाशनम् ।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा॥
॥ इति श्रीमद्पद्मपुराणे महालक्ष्म्यष्टकं सम्पूर्णम्॥

## ॥ लक्ष्म्यष्टोत्तरशतनामस्तोत्रम्॥

देव्युवाच

देवदेव महादेव त्रिकालज्ञ महेश्वर।
करुणाकर देवेश भक्तानुग्रहकारक॥ १॥
अष्टोत्तरशतं लक्ष्म्याः श्रोतुमिच्छामि तत्त्वतः॥

ईश्वर उवाच

देवि साधु महाभागे महाभाग्यप्रदायकम् ।
सर्वैश्वर्यकरं पुण्यं सर्वपापप्रणाशनम् ॥ २॥

सर्वदारिद्र्यशमनं श्रवणाद्भुक्तिमुक्तिदम् ।
राजवश्यकरं दिव्यं गुह्याद्गुह्यतमं परम् ॥ ३॥
दुर्लभं सर्वदेवानां चतुःषष्टिकलास्पदम् ।
पद्मादीनां वरान्तानां विधीनां नित्यदायकम् ॥ ४॥
समस्तदेवसंसेव्यमणिमाद्यष्टसिद्धिदम् ।
किमत्र बहुनोक्तेन देवी प्रत्यक्षदायकम् ॥ ५॥
तव प्रीत्याद्य वक्ष्यामि समाहितमनाः श्रृणुम् ।
अष्टोत्तरशतस्यास्य महालक्ष्मीस्तु देवता ॥ ६॥
क्लीम्बीजपदमित्युक्तं शक्तिस्तु भुवनेश्वरी।
अङ्गन्यासः करन्यास स इत्यादिः प्रकीर्तितः ॥ ७॥

॥ ध्यानम् ॥

वन्दे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदाम्
हस्ताभ्यामभयप्रदां मणिगणैर्नानाविधैर्भूषिताम् ।
भक्ताभीष्टफलप्रदां हरिहरब्रह्मादिभिः सेविताम्
पार्श्वे पङ्कजशङ्खपद्मनिधिभिर्युक्तां सदा शक्तिभिः ॥
सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥

॥ स्तोत्रम् ॥

प्रकृतिं विकृतिं विद्यां सर्वभूतहितप्रदाम् ।
श्रद्धां विभूतिं सुरभिं नमामि परमात्मिकाम् ॥ १॥
वाचं पद्मालयां पद्मां शुचिं स्वाहां स्वधां सुधाम् ।
धन्यां हिरण्मयीं लक्ष्मीं नित्यपुष्टां विभावरीम् ॥ २॥

अदितिं च दितिं दीप्तां वसुधां वसुधारिणीम् ।
नमामि कमलां कान्तां कामाक्षीं क्रोधसम्भवाम् ॥ ३ ॥
अनुग्रहपदां बुद्धिमनघां हरिवल्लभाम् ।
अशोकाममृतां दीप्तां लोकशोकविनाशिनीम् ॥ ४ ॥
नमामि धर्मनिलयां करुणां लोकमातरम् ।
पद्मप्रियां पद्महस्तां पद्माक्षीं पद्मसुन्दरीम् ॥ ५ ॥
पद्मोद्भवां पद्ममुखीं पद्मनाभप्रियां रमाम् ।
पद्ममालाधरां देवीं पद्मिनीं पद्मगन्धिनीम् ॥ ६ ॥
पुण्यगन्धां सुप्रसन्नां प्रसादाभिमुखीं प्रभाम् ।
नमामि चन्द्रवदनां चन्द्रां चन्द्रसहोदरीम् ॥ ७ ॥
चतुर्भुजां चन्द्ररूपामिन्दिरामिन्दुशीतलाम् ।
आह्लादजननीं पुष्टिं शिवां शिवकरीं सतीम् ॥ ८ ॥
विमलां विश्वजननीं तुष्टिं दारिद्र्यनाशिनीम् ।
प्रीतिपुष्करिणीं शान्तां शुक्लमाल्याम्बरां श्रियम् ॥ ९ ॥
भास्करीं बिल्वनिलयां वरारोहां यशस्विनीम् ।
वसुन्धरामुदाराङ्गीं हरिणीं हेममालिनीम् ॥ १० ॥
धनधान्यकरीं सिद्धिं सदा सौम्यां शुभप्रदाम् ।
नृपवेश्मगतानन्दां वरलक्ष्मीं वसुप्रदाम् ॥ ११ ॥
शुभां हिरण्यप्राकारां समुद्रतनयां जयाम् ।
नमामि मङ्गलां देवीं विष्णुवक्षःस्थलस्थिताम् ॥ १२ ॥
विष्णुपत्नीं प्रसन्नाक्षीं नारायणसमाश्रिताम् ।
दारिद्र्यध्वंसिनीं देवीं सर्वोपद्रवहारिणीम् ॥ १३ ॥

नवदुर्गां महाकालीं ब्रह्मविष्णुशिवात्मिकाम् ।
त्रिकालज्ञानसम्पन्नां नमामि भुवनेश्वरीम् ॥१४॥

लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीं
दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुराम् ।
श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधराम्
त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥१५॥

मातर्नमामि कमले कमलायताक्षि
श्रीविष्णुहृत्कमलवासिनि विश्वमातः।
क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि
प्रसीद सततं नमतां शरण्ये॥१६॥

त्रिकालं यो जपेद्विद्वान् षण्मासं विजितेन्द्रियः।
दारिद्र्यध्वंसनं कृत्वा सर्वमाप्नोत्ययत्नतः॥१७॥

देवीनामसहस्रेषु पुण्यमष्टोत्तरं शतम् ।
येन श्रियमवाप्नोति कोटिजन्मदरिद्रतः॥१८॥

भृगुवारे शतं धीमान् पठेद्वत्सरमात्रकम् ।
अष्टैश्वर्यमवाप्नोति कुबेर इव भूतले॥१९॥

दारिद्र्यमोचनं नाम स्तोत्रमम्बापरं शतम् ।
येन श्रियमवाप्नोति कोटिजन्मदरिद्रितः॥२०॥

भुक्त्वा तु विपुलान् भोगानस्याः सायुज्यमाप्नुयात् ।
प्रातःकाले पठेन्नित्यं सर्वदुःखोपशान्तये॥२१॥

पठंस्तु चिन्तयेद्देवीं सर्वाभरणभूषिताम्॥

॥इति श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥

## ॥ सरस्वती अष्टोत्तर शतनाम स्तोत्रम् ॥

सरस्वती महाभद्रा महामाया वरप्रदा।
श्रीप्रदा पद्मनिलया पद्माक्षी पद्मवक्त्रगा ॥ १ ॥

शिवानुजा पुस्तकधृत् ज्ञानमुद्रा रमा परा।
कामरूपा महाविद्या महापातकनाशिनी ॥ २ ॥

महाश्रया मालिनी च महाभोगा महाभुजा।
महाभागा महोत्साहा दिव्याङ्गा सुरवन्दिता ॥ ३ ॥

महाकाली महापाशा महाकारा महाङ्कुशा।
सीता च विमला विश्वा विद्युन्माला च वैष्णवी ॥ ४ ॥

चन्द्रिका चन्द्रवदना चन्द्रलेखविभूषिता।
सावित्री सुरसा देवी दिव्यालङ्कारभूषिता ॥ ५ ॥

वाग्देवी वसुधा तीव्रा महाभद्रा महाबला।
भोगदा भारती भामा गोविन्दा गोमती शिवा ॥ ६ ॥

जटिला विन्ध्यवासा च विन्ध्याचलविराजिता।
चण्डिका वैष्णवी ब्राह्मी ब्रह्मज्ञानैकसाधना ॥ ७ ॥

सौदामिनी सुधामूर्तिस्सुभद्रा सुरपूजिता।
सुवासिनी सुनासा च विनिद्रा पद्मलोचना ॥ ८ ॥

विद्यारूपा विशालाक्षी ब्रह्मजाया महाफला।
त्रयीमूर्ती त्रिकालज्ञा त्रिगुणा शास्त्ररूपिणी ॥ ९ ॥

शुम्भासुरप्रमथिनी शुभदा च सर्वात्मिका।
रक्तबीजनिहन्त्री च चामुण्डा चाम्बिका तथा ॥ १० ॥

मुण्डकाय-प्रहरणा  धूम्रलोचनमर्दना।
सर्वदेवस्तुता सौम्या सुरासुरनमस्कृता॥ ११ ॥

कालरात्री कलाधारा रूप-सौभाग्यदायिनी।
वाग्देवी च वरारोहा वाराही वारिजासना॥ १२॥

चित्राम्बरा चित्रगन्धा चित्रमाल्यविभूषिता।
कान्ता कामप्रदा वन्द्या विद्याधरा सुपूजिता॥ १३॥

श्वेतासना नीलभुजा चतुर्वर्गफलप्रदा।
चतुराननसाम्राज्या रक्तमध्या निरञ्जना॥ १४॥

हंसासना नीलजङ्घा ब्रह्मविष्णुशिवात्मिका।
एवं सरस्वती देव्याः नाम्नामष्टोत्तरं शतम् ॥ १५॥

॥ इति श्री सरस्वत्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम्॥

## ॥ सरस्वतीस्तोत्रम्  अगस्त्यमुनि प्रोक्तम्॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥ १ ॥

दोर्भिर्युक्ता चतुर्भिं स्फटिकमणिनिभैरक्षमालान्दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना॥ २॥

सुरासुरसेवितपादपङ्कजा
करे विराजत्कमनीयपुस्तका।
विरिञ्चिपत्नी कमलासनस्थिता
सरस्वती नृत्यतु वाचि मे सदा॥३॥

सरस्वती सरसिजकेसरप्रभा
तपस्विनी सितकमलासनप्रिया।
घनस्तनी कमलविलोललोचना
मनस्विनी भवतु वरप्रसादिनी॥४॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा॥५॥

सरस्वति नमस्तुभ्यं सर्वदेवि नमो नमः।
शान्तरूपे शशिधरे सर्वयोगे नमो नमः॥६॥

नित्यानन्दे निराधारे निष्कलायै नमो नमः।
विद्याधरे विशालाक्षि शुद्धज्ञाने नमो नमः॥७॥

शुद्धस्फटिकरूपायै सूक्ष्मरूपे नमो नमः।
शब्दब्रह्मि चतुर्हस्ते सर्वसिद्ध्यै नमो नमः॥८॥

मुक्तालङ्कृत-सर्वाङ्ग्यै मूलाधारे नमो नमः।
मूलमन्त्रस्वरूपायै मूलशक्त्यै नमो नमः॥९॥

मनो मणिमहायोगे वागीश्वरि नमो नमः।
वाग्भ्यै वरदहस्तायै वरदायै नमो नमः॥१०॥

वेदायै वेदरूपायै वेदान्तायै नमो नमः।
गुणदोषविवर्जिन्यै गुणदीप्त्यै नमो नमः॥११॥

सर्वज्ञाने सदानन्दे सर्वरूपे नमो नमः।
सम्पन्नायै कुमार्यै च सर्वज्ञे ते नमो नमः॥ १२॥

योगानार्य उमादेव्यै योगानन्दे नमो नमः।
दिव्यज्ञान त्रिनेत्रायै दिव्यमूर्त्यै नमो नमः॥ १३॥

अर्धचन्द्रजटाधारि चन्द्रबिम्बे नमो नमः।
चन्द्रादित्यजटाधारि चन्द्रबिम्बे नमो नमः॥ १४॥

अणुरूपे महारूपे विश्वरूपे नमो नमः।
अणिमाद्यष्टसिद्धायै आनन्दायै नमो नमः॥ १५॥

ज्ञान-विज्ञान-रूपायै ज्ञानमूर्ते नमो नमः।
नानाशास्त्र-स्वरूपायै नानारूपे नमो नमः॥ १६॥

पद्मदा पद्मवंशा च पद्मरूपे नमो नमः।
परमेष्ठ्यै परामूर्त्यै नमस्ते पापनाशिनि॥ १७॥

महादेव्यै महाकाल्यै महालक्ष्म्यै नमो नमः।
ब्रह्मविष्णुशिवायै च ब्रह्मनार्यै नमो नमः॥ १८॥

कमलाकरपुष्पा च कामरूपे नमो नमः।
कपालि कर्मदीप्तायै कर्मदायै नमो नमः॥ १९॥

सायं प्रातः पठेन्नित्यं षण्मासात् सिद्धिरुच्यते।
चोरव्याघ्रभयं नास्ति पठतां श्रृण्वतामपि॥ २०॥

इत्थं सरस्वतीस्तोत्रम् अगस्त्यमुनिवाचकम् ।
सर्वसिद्धिकरं नृणां सर्वपापप्रणाशनम् ॥ २१॥

॥ इति श्री अगस्त्यमुनि-प्रोक्तं सरस्वतीस्तोत्रं सम्पूर्णम्॥

## ॥ सरस्वतीस्तोत्रं श्रीमद्-ब्रह्मविरचितम् ॥

### ॥ न्यासः ॥

ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य।
ब्रह्मा ऋषिः। गायत्री छन्दः। श्रीसरस्वती देवता।
धर्मार्थकाममोक्षार्थे जपे विनियोगः।

### ॥ स्तोत्रम् ॥

आरूढा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्षसूत्रम्
वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानगम्या।
सा वीणां वादयन्ती स्वकरकरजपैः शास्त्रविज्ञानशब्दैः
क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥ १ ॥

श्वेतपद्मासना देवी श्वेतगन्धानुलेपना।
अर्चिता मुनिभिः सर्वैर्ऋषिभिः स्तूयते सदा।
एवं ध्यात्वा सदा देवीं वाञ्छितं लभते नरः ॥ २ ॥

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीम्
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ ३ ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ४ ॥

ह्रीं ह्रौं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे
भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे।
पद्मे पद्मोपविष्टे प्रणजनमनोमोदसम्पादयित्रि
प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि संहारसारे॥५॥

ऐं ऐं ऐं दृष्टमन्त्रे कमलभवमुखाम्भोजभूतस्वरूपे
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे।
न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्वे
विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले नित्यशुद्धे॥६॥

ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे
मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे॥७॥

धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये
नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे।
पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे
मातर्मात्रार्धतत्वे मतिमति मतिदे माधवप्रीतिमोदे॥८॥

हूं हूं हूं स्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते
सन्तुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भिणि स्तम्भविद्ये।
मोहे मुग्धप्रवाहे कुरु मम विमतिध्वान्तविध्वंसमीडे
गीर्गौर्वाग्भारति त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये॥९॥

स्तौमि त्वां त्वां च वन्दे मम खलु रसनां नो कदाचित्त्यजेथा
मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् ।
मा मे दुःखं कदाचित्क्वचिदपि विषयेऽप्यस्तु मे नाकुलत्वम्
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदाऽपि॥ १०॥

इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो
वाणी वाचस्पतेरप्यविदितविभवो वाक्पटुर्मृष्टकण्ठः।
स्यादिष्टाद्यर्थलाभैः सुतमिव सततं पातितं सा च देवी
सौभाग्यं तस्य लोके प्रभवति कविता विघ्नमस्तं प्रयाति॥ ११॥

निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः
कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् ।
दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो
वाग्देव्याः सम्प्रसादात्त्रिजगति विजयी जायते सत्सभासु॥ १२॥

ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः।
सारस्वतो जनः पाठात्सकृदिष्टार्थलाभवान् ॥ १३॥

पक्षद्वये त्रयोदश्याम् एकविंशतिसङ्ख्यया।
अविच्छिन्नः पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् ॥ १४॥

सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः।
वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः॥ १५॥

ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् ।
प्रयत्नेन पठेन्नित्यं सोऽमृतत्वाय कल्पते॥ १६॥

॥ इति श्रीमद्ब्रह्मणा विरचितं सरस्वतीस्तोत्रं सम्पूर्णम्॥

## ॥ शारदाभुजङ्गप्रयाताष्टकम् ॥

सुवक्षोजकुम्भां सुधापूर्णकुम्भाम्
प्रसादावलम्बां प्रपुण्यावलम्बाम् ।
सदास्येन्दुबिम्बां सदानोष्ठबिम्बाम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥ १ ॥

कटाक्षे दयार्द्रां करे ज्ञानमुद्राम्
कलाभिर्विनिद्रां कलापैः सुभद्राम् ।
पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्राम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥ २ ॥

ललामाङ्कफालां लसद्गानलोलाम्
स्वभक्तैकपालां यशःश्रीकपोलाम् ।
करे त्वक्षमालां कनत्प्रत्नलोलाम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ३ ॥

सुसीमन्तवेणीं दृशा निर्जितैणीम्
रमत्कीरवाणीं नमद्वज्रपाणीम् ।
सुधामन्थरास्यां मुदा चिन्त्यवेणीम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ४ ॥

सुशान्तां सुदेहां दृगन्ते कचान्ताम्
लसत्सल्लताङ्गीमनन्तामचिन्त्याम् ।
स्मरेत्तापसैः सङ्गपूर्वस्थितां ताम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥ ५ ॥

कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे
मराले मदेभे महोक्षेऽधिरूढाम् ।
महत्यां नवम्यां सदा सामरूपाम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥६॥

ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीम्
भजे मानसाम्भोजसुभ्रान्तभृङ्गीम् ।
निजस्तोत्रसङ्गीतनृत्यप्रभाङ्गीम्
भजे शारदाम्बामजस्रं मदम्बाम् ॥७॥

भवाम्भोजनेत्राजसम्पूज्यमानाम्
लसन्मन्दहासप्रभावक्त्रचिह्नाम् ।
चलच्चञ्चलाचारुताटङ्ककर्णौ
भजे शारदाम्बामजस्रं मदम्बाम् ॥८॥

॥इति श्रीमच्छङ्कराचार्यविरचितं शारदाभुजङ्गप्रयाताष्टकं सम्पूर्णम्॥

## ॥सरस्वतीस्तोत्रं बृहस्पतिविरचितम्॥

### बृहस्पतिरुवाच

सरस्वति नमस्यामि चेतनां हृदि संस्थिताम् ।
कण्ठस्थां पद्मयोनिं त्वां ह्रीङ्कारां सुप्रियां सदा॥१॥

मतिदां वरदां चैव सर्वकामफलप्रदाम् ।
केशवस्य प्रियां देवीं वीणाहस्तां वरप्रदाम् ॥२॥

मन्त्रप्रियां सदा हृद्यां कुमतिध्वंसकारिणीम् ।
स्वप्रकाशां निरालम्बामज्ञानतिमिरापहाम् ॥३॥

मोक्षप्रियां शुभां नित्यां सुभगां शोभनप्रियाम् ।
पद्मोपविष्टां कुण्डलिनीं शुक्लवस्त्रां मनोहराम् ॥४॥
आदित्यमण्डले लीनां प्रणमामि जनप्रियाम् ।
ज्ञानाकारां जगद्दीपां भक्तविघ्नविनाशिनीम् ॥५॥
इति सत्यं स्तुता देवी वागीशेन महात्मना।
आत्मानं दर्शयामास शरदिन्दुसमप्रभाम् ॥६॥

श्रीसरस्वत्युवाच

वरं वृणीष्व भद्रं त्वं यत्ते मनसि वर्तते।

बृहस्पतिरुवाच

प्रसन्ना यदि मे देवि परं ज्ञानं प्रयच्छ मे॥७॥

श्रीसरस्वत्युवाच

दत्तं ते निर्मलं ज्ञानं कुमतिध्वंसकारकम् ।
स्तोत्रेणानेन मां भक्त्या ये स्तुवन्ति सदा नराः॥८॥
लभन्ते परमं ज्ञानं मम तुल्यपराक्रमाः।
कवित्वं मत्प्रसादेन प्राप्नुवन्ति मनोगतम् ॥९॥
त्रिसन्ध्यं प्रयतो भूत्वा यस्त्विमं पठते नरः।
तस्य कण्ठे सदा वासं करिष्यामि न संशयः॥१०॥

॥इति श्रीरुद्रयामले श्रीबृहस्पतिविरचितं सरस्वतीस्तोत्रं सम्पूर्णम्॥



# ॥ सुब्रह्मण्यभुजङ्गम् ॥

सदा बालरूपाऽपि विघ्नाद्रिहन्त्री
महादन्तिवक्त्राऽपि पञ्चास्यमान्या।
विधीन्द्रादिमृग्या गणेशाभिधा मे
विधत्तां श्रियं काऽपि कल्याणमूर्तिः ॥ १ ॥

न जानामि शब्दं न जानामि चार्थं
न जानामि पद्यं न जानामि गद्यम् ।
चिदेका षडास्य हृदि द्योतते मे
मुखान्निःसरन्ते गिरश्चापि चित्रम् ॥ २ ॥

मयूराधिरूढं महावाक्यगूढं
मनोहारिदेहं महच्चित्तगेहम् ।
महीदेवदेवं महावेदभावं
महादेवबालं भजे लोकपालम् ॥ ३ ॥

यदा सन्निधानं गता मानवा मे
भवाम्भोधिपारं गतास्ते तदैव।
इति व्यञ्जयन् सिन्धुतीरे य आस्ते
तमीडे पवित्रं पराशक्तिपुत्रम् ॥ ४ ॥

यथाब्धेस्तरङ्गा लयं यन्ति तुङ्गाः
तथैवापदः सन्निधौ सेवतां मे।
इतीवोर्मिपङ्क्तिर्नृणां दर्शयन्तं
सदा भावये हृत्सरोजे गुहं तम् ॥ ५ ॥

गिरौ मन्निवासे नरा येऽधिरूढाः
तदा पर्वते राजते तेऽधिरूढाः।
इतीव ब्रुवन् गन्धशैलाधिरूढः
स देवो मुदे मे सदा षण्मुखोऽस्तु ॥६॥

महाम्भोधितीरे महापापचोरे
मुनीन्द्रानुकूले सुगन्धाख्यशैले।
गुहायां वसन्तं स्वभासा लसन्तं
जनार्तिं हरन्तं श्रयामो गुहं तम् ॥७॥

लसत् स्वर्णगेहे नृणां कामदोहे
सुमस्तोमसञ्छन्नमाणिक्यमञ्चे ।
समुद्यत् सहस्रार्कतुल्यप्रकाशं
सदा भावये कार्तिकेयं सुरेशम् ॥८॥

रणद्धंसके मञ्जुलेऽत्यन्तशोणे
मनोहारिलावण्यपीयूषपूर्णे ।
मनःषट्पदो मे भवक्लेशतप्तः
सदा मोदतां स्कन्द ते पादपद्मे ॥९॥

सुवर्णाभदिव्याम्बरैर्भासमानाम्
क्वणत्किङ्किणीमेखलाशोभमानाम् ।
लसद्धेमपट्टेन विद्योतमानाम्
कटिं भावये स्कन्द ते दीप्यमानाम् ॥१०॥

पुलिन्देशकन्याघनाभोगतुङ्ग-
तनालिङ्गनासक्तकाश्मीररागम् ।
नमस्यामहं तारकारे तवोरः
स्वभक्तावने सर्वदा सानुरागम् ॥ ११ ॥

विधौ क्लृप्तदण्डान् स्वलीलाधृताण्डान्
निरस्तेभशुण्डान् द्विषत् कालदण्डान् ।
हतेन्द्रारिषण्डान् जगत्राणशौण्डान्
सदा ते प्रचण्डान् श्रये बाहुदण्डान् ॥ १२ ॥

सदा शारदाः षण्मृगाङ्का यदि स्युः
समुद्यन्त एव स्थिताश्चेत् समन्तात् ।
सदा पूर्णबिम्बाः कलङ्कैश्च हीनाः
तदा त्वन्मुखानां ब्रुवे स्कन्द साम्यम् ॥ १३ ॥

स्फुरन् मन्दहासैः सहंसानि चञ्चत्
कटाक्षावलीभृङ्गसङ्घोज्ज्वलानि ।
सुधास्यन्दिबिम्बाधरणीशसूनो
तवाऽऽलोकये षण्मुखाम्भोरुहाणि ॥ १४ ॥

विशालेषु कर्णान्तदीर्घेष्वजस्रं
दयास्यन्दिषु द्वादशस्वीक्षणेषु ।
मयीषत्कटाक्षः सकृत् पातितश्चेत्
भवेत्ते दयाशील का नाम हानिः ॥ १५ ॥

सुताङ्गोद्भवो मेऽसि जीवेति षड्वा
जपन् मन्त्रमीशो मुदा जिघ्रते यान् ।
जगद्भारभृद्भ्यो जगन्नाथ तेभ्यः
किरीटोज्ज्वलेभ्यो नमो मस्तकेभ्यः ॥ १६ ॥

स्फुरद्रत्नकेयूरहाराभिरामः
चलत् कुण्डलश्रीलसद्गण्डभागः ।
कटौ पीतवासः करे चारुशक्तिः
पुरस्तान्ममास्तां पुरारेस्तनूजः ॥ १७ ॥

इहाऽऽयाहि वत्सेति हस्तान् प्रसार्याऽऽ-
ह्वयत्यादराच्छङ्करे मातुरङ्कात् ।
समुत्पत्य तातं श्रयन्तं कुमारं
हराश्लिष्टगात्रं भजे बालमूर्तिम् ॥ १८ ॥

कुमारेशसूनो गुह स्कन्द सेना-
पते शक्तिपाणे मयूराधिरूढ ।
पुलिन्दात्मजाकान्त भक्तार्तिहारिन्
प्रभो तारकारे सदा रक्ष मां त्वम् ॥ १९ ॥

प्रशान्तेन्द्रिये नष्टसंज्ञे विचेष्टे
कफोद्गारिवक्त्रे भयोत्कम्पिगात्रे ।
प्रयाणोन्मुखे मय्यनाथे तदानीं
द्रुतं मे दयालो भवाग्रे गुह त्वम् ॥ २० ॥

कृतान्तस्य दूतेषु चण्डेषु कोपात्
दहच्छिन्धि भिन्धीति मां तर्जयत्सु।
मयूरं समारुह्य मा भैरिति त्वं
पुरः शक्तिपाणिर्ममाऽऽयाहि शीघ्रम् ॥२१॥

प्रणम्यासकृत्पादयोस्ते पतित्वा
प्रसाद्य प्रभो प्रार्थयेऽनेकवारम् ।
न वक्तुं क्षमोऽहं तदानीं कृपाब्धे
न कार्यान्तकाले मनागप्युपेक्षा॥२२॥

सहस्राण्डभोक्ता त्वया शूरनामा
हतस्तारकः सिंहवक्त्रश्च दैत्यः।
ममान्तर्हृदिस्थं मनःक्लेशमेकं
न हंसि प्रभो किं करोमि क्व यामि॥२३॥

अहं सर्वदा दुःखभारावसन्नो
भवान् दीनबन्धुस्त्वदन्यं न याचे।
भवद्भक्तिरोधं सदा क्लृप्तबाधं
ममाधिं द्रुतं नाशयोमासुत त्वम् ॥२४॥

अपस्मारकुष्ठक्षयार्शः प्रमेह-
ज्वरोन्मादगुल्मादिरोगा महान्तः।
पिशाचाश्च सर्वे भवत् पत्रभूतिं
विलोक्य क्षणात् तारकारे द्रवन्ते॥२५॥

दृशि स्कन्दमूर्तिः श्रुतौ स्कन्दकीर्तिः
मुखे मे पवित्रं सदा तच्चरित्रम् ।
करे तस्य कृत्यं वपुस्तस्य भृत्यं
गुहे सन्तु लीना ममाशेषभावाः ॥ २६ ॥

मुनीनामुताहो नृणां भक्तिभाजाम्
अभीष्टप्रदाः सन्ति सर्वत्र देवाः ।
नृणामन्त्यजानामपि स्वार्थदाने
गुहाद्देवमन्यं न जाने न जाने ॥ २७ ॥

कलत्रं सुता बन्धुवर्गः पशुर्वा
नरो वाऽथ नारि गृहे ये मदीयाः ।
यजन्तो नमन्तः स्तुवन्तो भवन्तं
स्मरन्तश्च ते सन्तु सर्वे कुमार ॥ २८ ॥

मृगाः पक्षिणो दंशका ये च दुष्टाः
तथा व्याधयो बाधका ये मदङ्गे ।
भवच्छक्तितीक्ष्णाग्रभिन्नाः सुदूरे
विनश्यन्तु ते चूर्णितक्रौञ्चशैले ॥ २९ ॥

जनित्री पिता च स्वपुत्रापराधम्
सहेते न किं देवसेनाधिनाथ ।
अहं चातिबालो भवान् लोकतातः
क्षमस्वापराधं समस्तं महेश ॥ ३० ॥

नमः केकिने शक्तये चापि तुभ्यम्
नमश्छाग तुभ्यं नमः कुक्कुटाय।
नमः सिन्धवे सिन्धुदेशाय तुभ्यम्
पुनः स्कन्दमूर्ते नमस्ते नमोऽस्तु॥ ३१॥

जयानन्दभूमन् जयापारधामन्
जयामोघकीर्ते जयानन्दमूर्ते।
जयानन्दसिन्धो जयाशेषबन्धो
जय त्वं सदा मुक्तिदानेशसूनो॥ ३२॥

भुजङ्गाख्यवृत्तेन क्लृप्तं स्तवं यः
पठेद्भक्तियुक्तो गुहं सम्प्रणम्य।
स पुत्रान् कलत्रं धनं दीर्घमायुः
लभेत् स्कन्दसायुज्यमन्ते नरः सः॥ ३३॥

॥इति श्रीमच्छङ्कराचार्यविरचितं श्री सुब्रह्मण्यभुजङ्गं सम्पूर्णम्॥

## ॥सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रम्॥

स्कन्दो गुहः षण्मुखश्च फालनेत्रसुतः प्रभुः।
पिङ्गलः कृत्तिकासूनुः शिखिवाहो द्विषड्भुजः॥ १॥

द्विषण्णेत्रः शक्तिधरः पिशिताशप्रभञ्जनः।
तारकासुरसंहारि रक्षोबलविमर्दनः॥ २॥

मत्तः प्रमत्तोन्मत्तश्च सुरसैन्यसुरक्षकः।
देवसेनापतिः प्राज्ञः कृपालो भक्तवत्सलः॥ ३॥

उमासुतः शक्तिधरः कुमारः क्रौञ्चधारिणः।
सेनानीरग्निजन्मा च विशाखः शङ्करात्मजः॥४॥
शिवस्वामि गुणस्वामि सर्वस्वामि सनातनः।
अनन्तमूर्तिरक्षोभ्यः पार्वतीप्रियनन्दनः॥५॥
गङ्गासुतः शरोद्भूत आहूतः पावकात्मजः।
जृम्भः प्रजृम्भः उज्जृम्भः कमलासनसंस्तुतः॥६॥
एकवर्णो द्विवर्णश्च त्रिवर्णः सुमनोहरः।
चतुर्वर्णः पञ्चवर्णः प्रजापतिरहःपतिः॥७॥
अग्निगर्भः शमीगर्भो विश्वरेता सुरारिहा।
हरिद्वर्णः शुभकरो वटुश्च वटुवेषभृत्॥८॥
पूषा गभस्तिर्गहनो चन्द्रवर्णः कलाधरः।
मायाधरो महामायी कैवल्यः शङ्करात्मजः॥९॥
विश्वयोनिरमेयात्मा तेजोयोनिरनामयः।
परमेष्ठी परब्रह्म वेदगर्भो विराड्सुतः॥१०॥
पुलिन्दकन्याभर्ता च महासारस्वतव्रतः।
आश्रिताखिलदाता च चोरघ्नो रोगनाशनः॥११॥
अनन्तमूर्तिरानन्दः शिखण्डी-कृतकेतनः।
डम्भः परमडम्भश्च महाडम्भो वृषाकपिः॥१२॥
कारणोत्पत्ति-देहश्च कारणातीत-विग्रहः।
अनीश्वरोऽमृतः प्राणः प्राणायामपरायणः॥१३॥
विरुद्धहन्तो वीरघ्नो रक्तश्यामगलोऽपि च।
सुब्रह्मण्यो गुहप्रीतः ब्रह्मण्यो ब्राह्मणप्रियः॥१४॥

॥ इति श्री सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

## ॥ सुब्रह्मण्यपञ्चरत्नम् ॥

षडाननं चन्दनलेपिताङ्गं
महोरसं दिव्यमयूरवाहनम् ।
रुद्रस्य सूनुं सुरलोकनाथं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ १ ॥

जाज्वल्यमानं सुरवृन्दवन्द्यं
कुमार-धारातट-मन्दिरस्थम् ।
कन्दर्परूपं कमनीयगात्रं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ २ ॥

द्विषड्भुजं द्वादशदिव्यनेत्रं
त्रयीतनुं शूलमसीदधानम् ।
शेषावतारं कमनीयरूपं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ३ ॥

सुरारिघोराहवशोभमानं
सुरोत्तमं शक्तिधरं कुमारम् ।
सुधार-शक्त्यायुध-शोभिहस्तं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ४ ॥

इष्टार्थसिद्धिप्रदमीशपुत्रं
मिष्टान्नदं भूसुरकामधेनुम् ।
गङ्गोद्भवं सर्वजनानुकूलं
ब्रह्मण्यदेवं शरणं प्रपद्ये ॥ ५ ॥

यः श्लोकपञ्चमिदं पठतीह भक्त्या
ब्रह्मण्यदेव-विनिवेशित-मानसः सन् ।
प्राप्नोति भोगमखिलं भुवि यद्यदिष्टम्
अन्ते स गच्छति मुदा गुहसाम्यमेव॥

॥इति श्री सुब्रह्मण्यपञ्चरत्नं सम्पूर्णम्॥

## ॥सुब्रह्मण्यषोडशनामम्॥

सुब्रह्मण्यं प्रणाम्यहं सर्वज्ञं सर्वगं सदा।
अभीप्सितार्थ-सिद्ध्यर्थं प्रवक्ष्ये नामषोडशम् ॥१॥

प्रथमो ज्ञानशक्त्यात्मा द्वितीयो स्कन्द एव च।
अग्निभूश्च तृतीयस्स्यात् बाहुळेयश्चतुर्थकः॥२॥

गाङ्गेयः पञ्चमो विद्यात् षष्ठः शरवणोत्भवः।
सप्तमः कर्तिकेयः स्यात् कुमारः स्यादथाष्टकः॥३॥

नवमः षण्मुखश्चैव दशमः कुक्कुटध्वजः।
एकादशः शक्तिधरो गुहो द्वादश एव च॥४॥

त्रयोदशो ब्रह्मचारी षण्मातुर चतुर्दशः।
क्रौञ्चभित् पञ्चदशकः षोडशः शिखिवाहनः॥५॥

एतत् षोडशनामानि जपेत् सम्यक् सदादरम् ।
विवाहे दुर्गमे मार्गे दुर्जये च तथैव च॥६॥

कवित्वे च महाशास्त्रे विज्ञानार्थी फलं लभेत् ।
कन्यार्थी लभते कन्या जयार्थी लभते जयम् ॥७॥

पुत्रार्थी पुत्रलाभश्च धनार्थी लभते धनम् ।
आयुरारोग्यवश्यश्च धनधान्य-सुखावहम्॥ ॥८॥

॥इति श्री शङ्करसंहितायां शिवरहस्यखण्डे
श्री सुब्रह्मण्यषोडशनामस्तोत्रं सम्पूर्णम्॥

## ॥प्रज्ञाविवर्धन कार्तिकेय स्तोत्रम्॥

स्कन्द उवाच

योगीश्वरो महासेनः कार्तिकेयोऽग्निनन्दनः।
स्कन्दः कुमारः सेनानीः स्वामी शङ्करसम्भवः॥ १ ॥
गाङ्गेयस्ताम्रचूडश्च ब्रह्मचारी शिखिध्वजः।
तारकारिरुमापुत्रः क्रौञ्चारिश्च षडाननः॥ २ ॥
शब्दब्रह्मसमुद्रश्च सिद्धः सारस्वतो गुहः।
सनत्कुमारो भगवान् भोगमोक्षफलप्रदः॥ ३ ॥
शरजन्मा गणाधीशपूर्वजो मुक्तिमार्गकृत् ।
सर्वागमप्रणेता च वाञ्छितार्थप्रदर्शनः॥ ४॥
अष्टाविंशतिनामानि मदीयानीति यः पठेत् ।
प्रत्यूषं श्रद्धया युक्तो मूको वाचस्पतिर्भवेत् ॥ ५॥
महामन्त्रमयानीति मम नामानुकीर्तनम् ।
महाप्रज्ञामवाप्नोति नात्र कार्या विचारणा॥ ६ ॥

॥इति श्रीरुद्रयामले प्रज्ञाविवर्धनाख्यं
श्रीमत्कार्तिकेयस्तोत्रं सम्पूर्णम्॥



## ॥ हरिहरात्मजाष्टकम् ॥

हरिवरासनं विश्वमोहनम्
हरिदटीश्वरम् आराध्यपादुकम् ।
अरिविमर्दनं नित्यनर्तनम्
हरिहरात्मजं देवमाश्रये ॥ १ ॥

चरणकीर्तनं भक्तमानसम्
भरणलोलुपं नर्तनालसम् ।
अरुणभासुरं भूतनायकम्
हरिहरात्मजं देवमाश्रये ॥ २ ॥

प्रणयसत्यकं प्राणनयकम्
प्रणतकल्पकं सुप्रभञ्चितम् ।
प्रणवमन्दिरं कीर्तनप्रियम्
हरिहरात्मजं देवमाश्रये ॥ ३ ॥

तुरगवहनं सुन्दराननम्
वरगदायुधं वेदवर्णितम् ।
गुरुकृपाकरं कीर्तनप्रियम्
हरिहरात्मजं देवमाश्रये ॥ ४ ॥

त्रिभुवनार्चितं देवतात्मकम्
त्रिनयनप्रभुं दिव्यदेशिकम् ।
त्रिदशपूजितं चिन्तितप्रदम्
हरिहरात्मजं देवमाश्रये ॥ ५ ॥

भवभयापहं भावुकावकम्
भुवनमोहनं भूतिभूषणम् ।
धवलवाहनं दिव्यवारणम्
हरिहरात्मजं देवमाश्रये ॥ ६ ॥
कलमृदुस्मितं सुन्दराननम्
कलभकोमलं गात्रमोहनम् ।
कलभकेसरीं वाजिवाहनम्
हरिहरात्मजं देवमाश्रये ॥ ७ ॥
श्रितजनप्रियं चिन्तितप्रदम्
श्रुतिविभूषणं साधुजीवनम् ।
श्रुतिमनोहरं गीतलालसम्
हरिहरात्मजं देवमाश्रये ॥ ८ ॥

॥ इति श्री हरिहरात्मजाष्टकं सम्पूर्णम् ॥

## ॥ शास्तादशकम् ॥

लोकवीरं महापूज्यं सर्वरक्षकरं विभुम् ।
पार्वती-हृदयानन्दं शास्तारं प्रणमाम्यहम् ॥ १ ॥
विप्रपूज्यं विश्ववन्द्यं विष्णुशम्भोर्प्रियं सुतम् ।
क्षिप्रप्रसादनिरतं शास्तारं प्रणमाम्यहम् ॥ २ ॥
मतमातङ्गगमनं कारुण्यामृतपूरितम् ।
सर्वविघ्नहरं देवं शास्तारं प्रणमाम्यहम् ॥ ३ ॥
अस्मद्कुलेश्वरं देवम् अस्मच्छत्रुविनाशकम् ।
अस्मदिष्टप्रददरं शास्तारं प्रणमाम्यहम् ॥ ४ ॥

पाण्ड्येशवंशतिलकं केरळे केलिविग्रहम् ।
आर्तत्राणपरं देवं शास्तारं प्रणमाम्यहम् ॥५॥

त्र्यम्बकपुरादीशं गणाधिपसमन्वितम् ।
गजारूढमहं वन्दे शास्तारं प्रणमाम्यहम् ॥६॥

शिववीर्यसमुद्भूतं श्रीनिवासतनूद्भवं।
शिखिवाहानुजं वन्दे शास्तारं प्रणमाम्यहम् ॥७॥

यस्य धन्वन्तरिर्माता पिता देवो महेश्वरः।
तं शास्तारमहं वन्दे महारोगनिवारणम् ॥८॥

भूतनाथ सदानन्द सर्वभूतदयापर।
रक्ष रक्ष महाबाहो शास्त्रे तुभ्यं नमो नमः॥९॥

आश्यामकोमळविशालतनुं विचित्रम्
वसोऽवसान अरुणोत्फलदामहस्तम् ।
उत्तुङ्गरत्नमकुटं कुटिलाग्रकेशम्
शास्तारमिष्टवरदं शरणं प्रपद्ये॥१०॥

॥इति श्री शास्तादशकं सम्पूर्णम्॥



# ॥ आदित्यहृदयम् ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्रामम् अगस्त्यो भगवान् ऋषिः ॥ २ ॥

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥ ३ ॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यम् अक्षय्यं परमं शिवम् ॥ ४ ॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनम् आयुर्वर्धनमुत्तमम् ॥ ५ ॥

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥ ७ ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमः सोमो ह्यपां पतिः ॥ ८ ॥

पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १० ॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्ताण्ड अंशुमान् ॥ ११ ॥

हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥

व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः।
घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३ ॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १४ ॥

नक्षत्रग्रहताराणाम् अधिपो विश्वभावनः।
तेजसामपि तेजस्वी द्वादशात्मन् नमोऽस्तुते ॥ १५ ॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥

जयाय जयभद्राय हर्यश्वाय नमो नमः।
नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥

नम उग्राय वीराय सारङ्गाय नमो नमः।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥ १८ ॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥

नाशयत्येष वै भूतं तदेव सृजति प्रभुः।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः॥२२॥
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः।
एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥२३॥
वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः॥२४॥
एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव॥२५॥
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत् त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि॥२६॥
अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि।
एवमुक्त्वा तदाऽगस्त्यो जगाम च यथाऽऽगतम् ॥२७॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥२८॥
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥२९॥
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥३०॥
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसङ्क्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति॥३१॥
॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये
आदिकाव्ये युद्धकाण्डे आदित्यहृदयं नाम सप्तोत्तरशततमः सर्गः॥

# ॥ नवग्रहस्तोत्रम् ॥

जपाकुसुमसङ्काशं काश्यपेयं महद्युतिम् ।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥

दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् ।
नमामि शशिनं सोमं शम्भोर्मुकुटभूषणम् ॥ २ ॥

धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम् ।
कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥ ३ ॥

प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥

देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम् ।
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥

हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥

नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् ।
छायामार्तण्डसम्भूतं तं नमामि शनैश्चरम् ॥ ७ ॥

अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।
सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम् ॥ ८ ॥

पलाशपुष्पसङ्काशं तारकाग्रहमस्तकम् ।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥

इति व्यासमुखोद्गीतं यः पठेत् सुसमाहितः ।
दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ॥ १० ॥

नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम् ।
ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥ ११ ॥

ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः ।
ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥ १२ ॥

॥ इति श्रीव्यासविरचितं नवग्रहस्तोत्रं सम्पूर्णम् ॥

## ॥ नवग्रहपीडाहरस्तोत्रम् ॥

ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसम्भूतां पीडां हरतु मे रविः ॥ १ ॥

रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसम्भूतां पीडां हरतु मे विधुः ॥ २ ॥

भूमिपुत्रो महातेजा जगतां भयकृत् सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु मे कुजः ॥ ३ ॥

उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान् पीडां हरतु मे बुधः ॥ ४ ॥

देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसम्पूर्णः पीडां हरतु मे गुरुः ॥ ५ ॥

दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥ ६ ॥

सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥ ७ ॥

महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः।
अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी॥८॥
अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः।
उत्पातरूपो जगतां पीडां हरतु मे तमः॥९॥
॥इति ब्रह्माण्डपुराणोक्तं नवग्रहपीडाहरस्तोत्रं सम्पूर्णम्॥



॥सूर्यग्रहण-पीडापरिहारश्लोकः॥

इन्द्रोऽनलो दण्डधरश्च ऋक्षः प्रचेतसो-वायु-कुबेर-ईशाः।
मज्जन्म-ऋक्षे मम राशि-संस्थे अर्कोऽपरागं शमयन्तु सर्वे॥

॥चन्द्रग्रहण-पीडापरिहारश्लोकः॥

इन्द्रोऽनलो दण्डधरश्च ऋक्षः प्रचेतसो-वायु-कुबेर-ईशाः।
मज्जन्म-ऋक्षे मम राशि-संस्थे सोमोऽपरागं शमयन्तु सर्वे॥



॥कार्तवीर्यार्जुनस्तोत्रम्॥

ॐ श्रीं क्रों कार्तवीर्यार्जुनाय नमः।

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
तस्य स्मरणमात्रेण गतं नष्टं च लभ्यते॥



# ॥ वन्दे मातरम् ॥

सुजलां सुफलां मलयजशीतलाम्
शस्यश्यामलां मातरम्।
शुभ्र-ज्योत्स्नाम् पुलकित-यामिनीम्
फुल्ल-कुसुमित-द्रुमदलशोभिनीम्।
सुहासिनीं सुमधुरभाषिणीम्
सुखदां वरदां मातरम्॥
सप्तकोटि कण्ठ-कलकल-निनाद-कराले
निसप्तकोटि-भुजैर्धृत-खरकरवाले
के बोले मा तुमी अबले
बहुबलधारिणीं नमामि तारिणीम्
रिपुदलवारिणीं मातरम्॥
तुमि विद्या तुमि धर्म तुमि हृदि तुमि मर्म।
त्वं हि प्राणाः शरीरे बाहुते तुमि मा शक्ति।
हृदये तुमि मा भक्ति
तोमारै प्रतिमा गडि मन्दिरे मन्दिरे॥
त्वं हि दुर्गा दशप्रहरणधारिणी
कमला कमलदल विहारिणी
वाणी विद्यादायिनी नमामि त्वाम्
नमामि कमलाम् अमलाम् अतुलाम्
सुजलां सुफलां मातरम्॥
श्यामलां सरलां सुस्मितां भूषिताम्
धरणीं भरणीं मातरम्॥

## ॥ क्षमा प्रार्थना ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
तानि सर्वाणि हे देव क्षमस्व पुरुषोत्तम॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो॥

यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते॥

विसर्गबिन्दुमात्राणि पदपादाक्षराणि च।
न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि॥

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेत् ॥

सर्वम् श्री कृष्णार्पणमस्तु॥
ॐ शान्तिः शान्तिः शान्तिः॥
हरिः ॐ तत् सत्॥



# ॥ विष्णुसहस्रनामस्तोत्रम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परः शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥ २ ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ३ ॥
व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ४ ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ५ ॥
अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ६ ॥
यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ७ ॥
ॐ नमो विष्णवे प्रभविष्णवे

श्री वैशम्पायन उवाच

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ ८ ॥

श्री युधिष्ठिर उवाच

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ ९ ॥

को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ १० ॥

श्री भीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः ॥ ११ ॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥ १२ ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ १३ ॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ १४ ॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ १५ ॥

परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ १६ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं दैवतानां च भूतानां योऽव्ययः पिता ॥ १७ ॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ १८ ॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १९ ॥

यानि नामानि गौणानि विख्यातानि महात्मनः।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये॥२०॥

ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः॥२१॥

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते॥२२॥

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम्।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमं॥२३॥

॥पूर्वन्यासः॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य।
श्री वेदव्यासो भगवान् ऋषिः। अनुष्टुप् छन्दः।
श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता।
अमृतांशूद्भवो भानुरिति बीजम्। देवकीनन्दनः स्रष्टेति शक्तिः।
उद्भवः क्षोभणो देव इति परमो मन्त्रः।
शङ्खभृन्नन्दकी चक्रीति कीलकम्।
शार्ङ्गधन्वा गदाधर इत्यस्त्रम्।
रथाङ्गपाणिरक्षोभ्य इति नेत्रम्।
त्रिसामा सामगः सामेति कवचम्।
आनन्दं परब्रह्मेति योनिः।
ऋतुः सुदर्शनः काल इति दिग्बन्धः।
श्रीविश्वरूप इति ध्यानम्।
श्रीमहाविष्णुप्रीत्यर्थे सहस्रनामजपे विनियोगः॥

॥ ध्यानम् ॥

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतेमौक्तिकानाम्
मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैः
आनन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥ १ ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैः
चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ २ ॥
ॐ नमो भगवते वासुदेवाय

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशम्
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यम्
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ३ ॥

मेघश्यामं पीतकौशेयवासम्
श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षम्
विष्णुं वन्दे सर्वलोकैकनाथम् ॥ ४ ॥

नमः समस्तभूतानामादिभूताय भूभृते।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥ ५ ॥

सशङ्खचक्रं सकिरीटकुण्डलम्
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षःस्थलशोभिकौस्तुभम्
नमामि विष्णुं शिरसा चतुर्भुजम् ॥ ६ ॥

छायायां पारिजातस्य हेमसिंहासनोपरि
आसीनमम्बुदश्याममायताक्षमलङ्कृतम् ।
चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम्
रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये ॥ ७ ॥

॥ हरिः ॐ ॥

॥ विश्वस्मै नमः ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥७॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः॥८॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥९॥

सुरेशः शरणं शर्म विश्वरेता प्रजाभवः।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः॥१०॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः॥११॥

वसुर्वसुमनाः सत्यः समात्माऽसम्मितः समः।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः॥१२॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः॥१३॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः॥१४॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः॥१५॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः॥१६॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः॥ १७॥
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः।
अतीन्द्रियो महामायो महोत्साहो महाबलः॥ १८॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्॥ १९॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः॥ २०॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः।
हिरण्यनाभः सुतपा पद्मनाभः प्रजापतिः॥ २१॥
अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा॥ २२॥
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः॥ २३॥
अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात्॥ २४॥
आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः।
अहः संवर्तको वह्निरनिलो धरणीधरः॥ २५॥
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः॥ २६॥
असङ्ख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः॥ २७॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः॥२८॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः॥२९॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः॥३०॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः॥३१॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः॥३२॥

युगादिकृद्युगावर्तो नैकमायो महाशनः।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित्॥३३॥

इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः॥३४॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः।
अपान्निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः॥३५॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः॥३६॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः॥३७॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः॥३८॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः॥ ३९॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः।
महीधरो महाभागो वेगवानमिताशनः॥ ४०॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः।
करणं कारणं कर्ता विकर्ता गहनो गुहः॥ ४१॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः॥ ४२॥

रामो विरामो विरतो मार्गो नेयो नयोऽनयः।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः॥ ४३॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः॥ ४४॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः॥ ४५॥

विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः॥ ४६॥

अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः॥ ४७॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः॥ ४९॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥५०॥
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥५१॥
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥५२॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥५३॥
सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः।
विनयो जयः सत्यसन्धो दाशार्हः सात्त्वतां पतिः ॥५४॥
जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥५५॥
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥५६॥
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥५७॥
महावराहो गोविन्दः सुषेणः कनकाङ्गदी।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥५८॥
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥५९॥
भगवान् भगहाऽऽनन्दी वनमाली हलायुधः।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥६०॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः।
दिवःस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्।
सन्न्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥ ६२ ॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः।
विजितात्माऽविधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥

कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥

ब्रह्मण्यो ब्रह्मकृद्-ब्रह्मा ब्रह्म ब्रह्मविवर्धनः।
ब्रह्मविद्-ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

महाक्रमो महाकर्मा महातेजा महोरगः।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥
एको नैकः सवः कः किं यत् तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥

समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा॥ ८३॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ८४॥
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः।
अर्को वाजसनः श्रृङ्गी जयन्तः सर्वविज्जयी॥ ८५॥
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः।
महाह्रदो महागर्तो महाभूतो महानिधिः॥ ८६॥
कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः॥ ८७॥
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।
न्यग्रोधोऽदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः॥ ८८॥
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः॥ ८९॥
अणुर्बृहत् कृशः स्थूलो गुणभृन्निर्गुणो महान्।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः॥ ९०॥
भारभृत् कथितो योगी योगीशः सर्वकामदः।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः॥ ९१॥
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः।
अपराजितः सर्वसहो नियन्ताऽनियमोऽयमः॥ ९२॥
सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः॥ ९३॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः।
रविर्विरोचनः सूर्यः सविता रविलोचनः॥९४॥

अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः॥९५॥

सनात् सनातनतमः कपिलः कपिरव्ययः।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः॥९६॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः॥९७॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः॥९८॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः॥९९॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः॥१००॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः।
जननो जनजन्मादिर्भीमो भीमपराक्रमः॥१०१॥

आधारनिलयोऽधाता पुष्पहासः प्रजागरः।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः॥१०२॥

प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः॥१०३॥

भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः॥१०४॥

यज्ञभृद्-यज्ञकृद्-यज्ञी यज्ञभुग्-यज्ञसाधनः।
यज्ञान्तकृद्-यज्ञगुह्यमन्नमन्नाद एव च॥१०५॥

आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः॥१०६॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः॥१०७॥

सर्वप्रहरणायुध ॐ नम इति।

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी।
श्रीमान् नारायणो विष्णुर्वासुदेवोऽभिरक्षतु॥१०८॥

श्री वासुदेवोऽभिरक्षतु ॐ नम इति।

॥फलश्रुति श्लोकाः॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१॥

य इदं श‍ृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः॥२॥

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥३॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी चाऽऽप्नुयात्प्रजाम् ॥४॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥५॥

यशः प्राप्नोति विपुलं याति प्राधान्यमेव च।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥६॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः॥७॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
भयान्मुच्येत भीतस्तु मुच्येतऽऽपन्न आपदः॥८॥

दुर्गाण्यतितरत्याशुः पुरुषः पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः॥९॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१०॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित्।
जन्ममृत्युजराव्याधिभयं नैवोपजायते॥११॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतऽऽत्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः॥१२॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे॥१३॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः।
वासुदेवस्य वीर्येण विधृतानि महात्मनः॥१४॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१५॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥१६॥

सर्वागमानामाचारः प्रथमं परिकल्पते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥ १७॥
ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १८॥
योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादि कर्म च।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १९॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रीँल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥ २०॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च॥ २१॥
विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ २२॥
न ते यान्ति पराभवम् ॐ नम इति।

अर्जुन उवाच

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम।
भक्तानामनुरक्तानां त्राता भव जनार्दन॥ २३॥

श्रीभगवानुवाच

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः॥ २४॥
स्तुत एव न संशय ॐ नम इति।

व्यास उवाच

वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ २५ ॥

श्री वासुदेव नमोऽस्तुत ॐ नम इति।

पार्वत्युवाच

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥ २६ ॥

श्री ईश्वर उवाच

श्रीराम राम रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं राम नाम वरानने ॥ २७ ॥

श्रीरामनाम वरानन ॐ नम इति।

ब्रह्मोवाच

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥ २८ ॥

सहस्रकोटियुगधारिणे नम ॐ नम इति।

सञ्जय उवाच

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ २९ ॥

श्रीभगवानुवाच

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ३० ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ३१ ॥

आर्ता विषण्णाः शिथिलाश्च भीताः
घोरेषु च व्याधिषु वर्तमानाः।
सङ्कीर्त्य नारायणशब्दमात्रम्
विमुक्तदुःखाः सुखिनो भवन्तु ॥ ३२ ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि॥

॥ ॐ तत्सदिति श्रीमन्महाभारते
शतसाहस्र्यां संहितायां वैयासिक्याम् आनुशासनिकपर्वणि
श्री भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं सम्पूर्णम्॥



# ॥ सङ्क्षेपरामायणम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥
वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्व कृतकृत्याः स्युः तं नमामि गजाननम् ॥

## ॥ सरस्वती प्रार्थना ॥

दोर्भिर्युक्ता चतुर्भिं स्फटिकमणिनिभैरक्षमालान्दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

## ॥ श्रीवाल्मीकि नमस्क्रिया ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकि कोकिलम् ॥ १ ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
श्रृण्वन् रामकथानादं को न याति परां गतिम् ॥ २ ॥
य पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥

## ॥ श्री हनुमन्नमस्क्रिया ॥

गोष्पदीकृत वाराशिं मशकीकृत-राक्षसम् ।
रामायण-महामाला-रत्नं वन्देऽनिलात्मजम् ॥ १ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ २ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ३ ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ४ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ५ ॥

## ॥ श्रीरामायणप्रार्थना ॥

यः कर्णान्जलिसम्पुटैरहरहः सम्यक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्म-व्याधि-जरा-विपत्ति-मरणैरत्यन्त-सोपद्रवम्
संसारं स विहाय गच्छति पुमान् विष्णोः पदं शाश्वतम् ॥ १ ॥

तदुपगत-समास-सन्धियोगं सममधुरोपनतार्थ-वाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ २ ॥

वाल्मीकि-गिरिसम्भूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ ३ ॥

श्लोकसारजलाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥४॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे।
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना॥५॥

॥श्रीरामध्यानम्॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्वं मुनिभ्यः परम्
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥१॥
वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥२॥
नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥३॥

॥ श्रीमद्रामायणम् ॥

॥ बालकाण्डः ॥

॥ अथ प्रथमोऽध्यायः ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥

आत्मवान् को जितक्रोधो मतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥

श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चऽऽमन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ ८ ॥

बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः॥ १०॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः॥ ११॥
धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥ १२॥
प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता॥ १३॥
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता।।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः॥ १४॥
सर्वशास्त्रार्थतत्त्वज्ञो स्मृतिमान् प्रतिभानवान् ।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः॥ १५॥
सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः॥ १६॥
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव॥ १७॥
विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः॥ १८॥
धनदेनसमस्त्यागे सत्ये धर्म इवापरः।
तमेवङ्गुणसम्पन्नं रामं सत्यपराक्रमम् ॥ १९॥
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया॥ २०॥

यौवराज्येन संयोक्तुम् ऐच्छत् प्रीत्या महीपतिः।
तस्याभिषेकसम्भारान् दृष्ट्वा भार्याऽथ कैकयी॥२१॥

पूर्वं दत्तवरा देवी वरमेनमयाचत।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥२२॥

स सत्यवचनाद्राजा धर्मपाशेन संयतः।
विवासयामास सुतं रामं दशरथः प्रियम् ॥२३॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥२४॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह।
स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः॥२५॥

भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ।
रामस्य दयिता भार्या नित्यं प्राणसमाहिता॥२६॥

जनकस्य कुले जाता देवमायेव निर्मिता।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः॥२७॥

सीताप्यनुगता रामं शशिनं रोहिणी यथा।
पौरैरनुगतो दूरं पित्रा दशरथेन च॥२८॥

शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥२९॥

गुहेन सहितो रामो लक्ष्मणेन च सीतया।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः॥३०॥

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः॥३१॥

देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ।
चित्रकूटं गते रामे पुत्रशोकातुरस्तथा॥ ३२॥

राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।
मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः॥ ३३॥

नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः।
स जगाम वनं वीरो रामपादप्रसादकः॥ ३४॥

गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।
अयाचत् भ्रातरं रामम् आर्यभावपुरस्कृतः॥ ३५॥

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।
रामोऽपि परमोदारः सुमुखः सुमहायशाः॥ ३६॥

न चेच्छत् पितुरादेशात् राज्यं रामो महाबलः।
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः॥ ३७॥

निवर्तयामास ततो भरतं भरताग्रजः।
स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८॥

नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया।
गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः॥ ३९॥

रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।
तत्राऽऽगमनमेकाग्रे दण्डकान् प्रविवेश ह॥ ४०॥

प्रविश्य तु महारण्यं रामो राजीवलोचनः।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह॥ ४१॥

सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२॥

खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ।
वसतस्तस्य रामस्य वने वनचरैः सह ॥४३॥
ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ।
स तेषां प्रति शुश्राव राक्षसानां तथा वने ॥४४॥
प्रतिज्ञातश्च रामेण वधस्संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥४५॥
तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥४६॥
ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥४७॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।
वने तस्मिन् निवसता जनस्थाननिवासिनाम् ॥४८॥
रक्षसां निहतान्यासन् सहस्राणि चतुर्दश।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥४९॥
सहायं वरयामास मारीचं नाम राक्षसं।
वार्यमाणस्सुबहुशो मारीचेन स रावणः ॥५०॥
न विरोधो बलवता क्षमो रावण तेन ते।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥५१॥
जगाम सहमारीचस्तस्याऽऽश्रमपदं तदा।
तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥५२॥
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम्।।
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥५३॥

राघवः शोकसन्तप्तो विललापऽऽकुलेन्द्रियः।
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥५४॥
मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥५५॥
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥५६॥
श्रमणीं धर्मनिपुणाम् अभिगच्छेति राघव।
सोऽभ्यगच्छन् महातेजाः शबरीं शत्रुसूदनः॥५७॥
शबर्या पूजितः सम्यग्रामो दशरथात्मजः।
पम्पातीरे हनुमता सङ्गतो वानरेण ह॥५८॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः।
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः॥५९॥
आदितस्तत् यथा वृत्तं सीतायाश्च विशेषतः।
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः॥६०॥
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।
ततो वानरराजेन वैरानुकथनं प्रति॥६१॥
रामायऽऽवेदितं सर्वं प्रणयाद्दुःखितेन च।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति॥६२॥
वालिनश्च बलं तत्र कथयामास वानरः।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे॥६३॥
राघवः प्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवः महापर्वतसन्निभम् ॥६४॥

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्ति महाबलः।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥६५॥

बिभेद च पुनः सालान् सप्तैकेन महेषुणा।
गिरिं रसातलं चैव जनयन् प्रत्ययं तदा॥६६॥

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः।
किष्किन्धां रामसहितो जगाम च गुहां तदा॥६७॥

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः।
तेन नादेन महता निर्जगाम हरीश्वरः॥६८॥

अनुमान्य तदा तारां सुग्रीवेण समागतः।
निजघान च तत्रैनं शरेणैकेन राघवः॥६९॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥७०॥

स च सर्वान् समानीय वानरान् वानरर्षभः।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥७१॥

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥७२॥

तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥७३॥

निवेदयित्वाऽभिज्ञानं प्रवृत्तिं च निवेद्य च।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥७४॥

पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥७५॥

अस्त्रेणोन्मुहमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया॥ ७६ ॥
ततो दग्ध्वा पुरीं लङ्काम् ऋते सीतां च मैथिलीम् ।
रामाय प्रियमाख्यातुं पुनरायान् महाकपिः॥ ७७॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः॥ ७८॥
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः॥ ७९॥
दर्शयामास चाऽऽत्मानं समुद्रः सरितां पतिः।
समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ८०॥
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे।
रामस्सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८१॥
तामुवाच ततो रामः परुषं जनसंसदि।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती॥ ८२॥
ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम् ।
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ८३॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः।
बभौ रामस्सम्प्रहृष्टः पूजितस्सर्वदेवतैः॥ ८४॥
अभ्यषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥ ८५॥
देवताभ्यो वरान् प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्-वृतः॥ ८६॥

भरद्वाजाश्रमं गत्वा रामस्सत्यपराक्रमः।
भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥८७॥

पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा।
पुष्पकं तत् समारुह्य नन्दिग्रामं ययौ तदा॥८८॥

नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥८९॥

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः॥९०॥

न पुत्रमरणं केचिद्-द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः॥९१॥

न चाग्निजं भयं किञ्चित् नाप्सु मज्जन्ति जन्तवः।
न वातजं भयं किञ्चित् नापि ज्वरकृतं तथा॥९२॥

न चापि क्षुद्भयं तत्र न तस्करभयं तथा।
नगराणि च राष्ट्राणि धनधान्ययुतानि च॥९३॥

नित्यं प्रमुदितास्सर्वे यथा कृतयुगे तथा।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः॥९४॥

गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ।
असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः॥९५॥

राजवंशान् शतगुणान् स्थापयिष्यति राघवः।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति॥९६॥

दशवर्षसहस्राणि दशवर्षशतानि च।
रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति॥९७॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥९८॥

एतदाख्यानमायुष्यं पठन् रामायणं नरः।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥९९॥

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्त्वमीयात् ॥१००॥

॥ इति श्रीमद्वाल्मीकिरामायणे आदिकाव्ये बालकाण्डे प्रथमः सर्गः ॥

॥ मङ्गलश्लोकाः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्यायेन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥

चरितं रघुनाथस्य शतकोटि-प्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ॥ ४ ॥

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः॥६॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते।
वृत्रनाशे समभवत् तत्ते भवतु मङ्गलम् ॥७॥

यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा।
अदितिर्मङ्गलं प्रादात् तत्ते भवतु मङ्गलम् ॥८॥

त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥९॥

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ये।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा॥१०॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि॥

## ॥ शिवसहस्रनामस्तोत्रम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

वन्दे शम्भुमुमापतिं सुरगुरुं वन्दे जगत्कारणम्
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियम्
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥

### ॥ पूर्वभागः ॥

### युधिष्ठिर उवाच

त्वयाऽऽपगेय नामानि श्रुतानीह जगत्पतेः ।
पितामहेशाय विभोर्नामान्याचक्ष्व शम्भवे ॥ १ ॥
बभ्रवे विश्वरूपाय महाभाग्यं च तत्त्वतः ।
सुरासुरगुरौ देवे शङ्करेऽव्यक्तयोनये ॥ २ ॥

### भीष्म उवाच

अशक्तोऽहं गुणान् वक्तुं महादेवस्य धीमतः ।
यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ ३ ॥
ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च।
ब्रह्मादयः पिशाचान्ता यं हि देवा उपासते ॥ ४ ॥

प्रकृतीनां परत्वेन पुरुषस्य च यः परः।
चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्वदर्शिभिः॥५॥
प्रकृतिं पुरुषं चैव क्षोभयित्वा स्वतेजसा।
ब्रह्माणमसृजत् तस्माद्देवदेवः प्रजापतिः॥६॥
को हि शक्तो गुणान् वक्तुं देवदेवस्य धीमतः।
गर्भजन्मजरायुक्तो मर्त्यो मृत्युसमन्वितः॥७॥
को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम्।
ऋते नारायणात् पुत्र शङ्खचक्रगदाधरात्॥८॥
एष विद्वान् गुणश्रेष्ठो विष्णुः परमदुर्जयः।
दिव्यचक्षुर्महातेजा वीक्ष्यते योगचक्षुषा॥९॥
रुद्रभक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना।
तं प्रसाद्य तदा देवं बदर्यां किल भारत॥१०॥
अर्थात् प्रियतरत्वं च सर्वलोकेषु वै तदा।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात्॥११॥
पूर्णं वर्षसहस्रं तु तप्तवानेष माधवः।
प्रसाद्य वरदं देवं चराचरगुरुं शिवम्॥१२॥
युगे युगे तु कृष्णेन तोषितो वै महेश्वरः।
भक्त्या परमया चैव प्रीतश्चैव महात्मनः॥१३॥
ऐश्वर्यं यादृशं तस्य जगद्योनेर्महात्मनः।
तदयं दृष्टवान् साक्षात् पुत्रार्थे हरिरच्युतः॥१४॥
यस्मात् परतरं चैव नान्यं पश्यामि भारत।
व्याख्यातुं देवदेवस्य शक्तो नामान्यशेषतः॥१५॥

एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिं चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप॥ १६ ॥

सुरासुरगुरो देव विष्णो त्वं वक्तुम् अर्हसि।
शिवाय शिवरूपाय यन्माऽपृच्छद्युधिष्ठिरः॥ १७॥

नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मवादिना।
निवेदितं ब्रह्मलोके ब्रह्मणो यत् पुराऽभवत् ॥ १८॥

द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः।
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव॥ १९॥

वासुदेव उवाच

न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः।
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः॥ २०॥

न विदुर्यस्य निधनम् आदिं वा सूक्ष्मदर्शिनः।
स कथं नाममात्रेण शक्यो ज्ञातुं सतां गतिः॥ २१॥

तस्याहम् असुरघ्नस्य कांश्चिद्भगवतो गुणान् ।
भवतां कीर्तयिष्यामि व्रतेशाय यथातथम् ॥ २२॥

वैशम्पायन उवाच

एवमुक्त्वा तु भगवान् गुणांस्तस्य महात्मनः।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः॥ २३॥

वासुदेव उवाच

ततः स प्रयतो भूत्वा मम तात युधिष्ठिर।
प्राञ्जलिः प्राह विप्रर्षिर्नामसङ्ग्रहामादितः॥ २४॥

उपमन्युरुवाच

ब्रह्मप्रोक्तैर्ऋषिप्रोक्तैर्वेदवेदाङ्गसम्भवैः ।
सर्वलोकेषु विख्यातं स्तुत्यं स्तोष्यामि नामभिः ॥ २५ ॥
महद्भिर्विहितैः सत्यैः सिद्धैः सर्वार्थसाधकैः ।
ऋषिणा तण्डिना भक्त्या कृतैर्वेदकृतात्मना ॥ २६ ॥
यथोक्तैः साधुभिः ख्यातैर्मुनिभिस्तत्वदर्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम् ॥ २७ ॥
श्रुतैः सर्वत्र जगति ब्रह्मलोकावतारितैः ।
सत्यैस्तत् परमं ब्रह्म ब्रह्मप्रोक्तं सनातनम् ।
वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ॥ २८ ॥
वरयैनं भवं देवं भक्तस्त्वं परमेश्वरम् ।
तेन ते श्रावयिष्यामि यत् तद्ब्रह्म सनातनम् ॥ २९ ॥
न शक्यं विस्तरात् कृत्स्नं वक्तुं शर्वस्य केनचित् ।
युक्तेनापि विभूतीनामपि वर्षशतैरपि ॥ ३० ॥
यस्यादिर्मध्यमन्तं च सुरैरपि न गम्यते ।
कस्तस्य शक्नुयाद्वक्तुं गुणान् कार्त्स्न्येन माधव ॥ ३१ ॥
किं तु देवस्य महतः संक्षिप्तार्थपदाक्षरम् ।
शक्तितश्चरितं वक्ष्ये प्रसादात् तस्य धीमतः ॥ ३२ ॥
अप्राप्य तु ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ।
यदा तेनाभ्यनुज्ञातः स्तुतो वै स तदा मया ॥ ३३ ॥
अनादिनिधनस्याहं जगद्योनेर्महात्मनः ।
नाम्नां कञ्चित् समुद्देश्यं वक्ष्याम्यव्यक्तयोनिनः ॥ ३४ ॥

वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः।
शृणु नाम्नां चयं कृष्ण यदुक्तं पद्मयोनिना॥ ३५॥

दशनामसहस्राणि यान्याह प्रपितामहः।
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ॥ ३६॥

गिरेः सारं यथा हेम पुष्पसारं यथा मधु।
घृतात् सारं यथा मण्डस्तथैतत् सारमुद्धृतम् ॥ ३७॥

सर्वपापापहमिदं चतुर्वेदसमन्वितम् ।
प्रयत्नेनाधिगन्तव्यं धार्यं च प्रयतात्मना॥ ३८॥

सर्वभूतात्मभूतस्य हरस्यामिततेजसः।

अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु।
यच्छ्रुत्वा मनुजव्याघ्र सर्वान् कामानवाप्स्यसि॥ ३९॥

॥ ध्यानम् ॥

शान्तं पद्मानस्थं शशिधरमुकुटं पञ्चवक्त्रं त्रिनेत्रम्
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं घण्टां प्रलयहुतवहं साङ्कुशं वामभागे
नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि॥

॥ स्तोत्रम् ॥

ॐ स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः॥ १॥

जटी चर्मी शिखण्डी च सर्वाङ्गः सर्वभावनः।
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः॥ २॥

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः।
श्मशानवासी भगवान् खचरो गोचरोऽर्दनः॥ ३॥
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः।
उन्मत्तवेषप्रच्छन्नः सर्वलोकप्रजापतिः॥ ४॥
महारूपो महाकायो वृषरूपो महायशाः।
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः॥ ५॥
लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः।
पवित्रं च महांश्चैव नियमो नियमाश्रितः॥ ६॥
सर्वकर्मा स्वयम्भूत आदिरादिकरो निधिः।
सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः॥ ७॥
चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्वरः।
अत्रिरत्र्यानमस्कर्ता मृगबाणार्पणोऽनघः॥ ८॥
महातपा घोरतपा अदीनो दीनसाधकः।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः॥ ९॥
योगी योज्यो महाबीजो महारेता महाबलः।
सुवर्णरेताः सर्वज्ञः सुबीजो बीजवाहनः॥ १०॥
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः।
विश्वरूपः स्वयंश्रेष्ठो बलवीरोऽबलो गणः॥ ११॥
गणकर्ता गणपतिर्दिग्वासाः काम एव च।
मन्त्रवित् परमोमन्त्रः सर्वभावकरो हरः॥ १२॥
कमण्डलुधरो धन्वी बाणहस्तः कपालवान्।
अशनी शतघ्नी खड्गी पट्टिशी चऽऽयुधी महान्॥ १३॥

स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः।
उष्णिषी च सुवक्त्रश्च उदग्रो विनतस्तथा॥ १४॥
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च।
सृगालरूपः सिद्धार्थो मुण्डः सर्वशुभङ्करः॥ १५॥
अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः॥ १६॥
त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः।
अहश्चरो नक्तञ्चरस्तिग्ममन्युः सुवर्चसः॥ १७॥
गजहा दैत्यहा कालो लोकधाता गुणाकरः।
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः॥ १८॥
कालयोगी महानादः सर्वकामश्चतुष्पथः।
निशाचरः प्रेतचारी भूतचारी महेश्वरः॥ १९॥
बहुभूतो बहुधरः स्वर्भानुरमितो गतिः।
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलालसः॥ २०॥
घोरो महातपाः पाशो नित्यो गिरिरुहो नभः।
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः॥ २१॥
अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः।
दक्षयागापहारी च सुसहो मध्यमस्तथा॥ २२॥
तेजोपहारी बलहा मुदितोऽर्थोऽजितो वरः।
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः॥ २३॥
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः।
सुतीक्ष्णदशनश्चैव महाकायो महाननः॥ २४॥

विष्वक्सेनो हरिर्यज्ञः संयुगापीडवाहनः।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥२५॥
विष्णुप्रसादितो यज्ञः समुद्रो बडवामुखः।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः॥२६॥
उग्रतेजा महातेजा जन्यो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः सर्वविग्रह एव च॥२७॥
शिखी मुण्डी जटी ज्वाली मूर्तिजो मूर्धजो बली।
वैणवी पणवी ताली खली कालकटङ्कटः॥२८॥
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ।
प्रजापतिर्विश्वबाहुर्विभागः सर्वगोऽमुखः॥२९॥
विमोचनः सुसरणो हिरण्यकवचोद्भवः।
मेढ्रजो बलचारी च महीचारी स्रुतस्तथा॥३०॥
सर्वतूर्यविनोदी च सर्वातोद्यपरिग्रहः।
व्यालरूपो गुहावासी गुहो माली तरङ्गवित् ॥३१॥
त्रिदशस्त्रिकालधृक् कर्मसर्वबन्धविमोचनः।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः॥३२॥
साङ्ख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः।
प्रस्कन्दनो विभागज्ञोऽतुल्यो यज्ञभागवित् ॥३३॥
सर्ववासः सर्वचारी दुर्वासा वासवोऽमरः।
हैमो हेमकरो यज्ञः सर्वधारी धरोत्तमः॥३४॥
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः।
सङ्ग्रहो निग्रहः कर्ता सर्पचीरनिवासनः॥३५॥

मुख्योऽमुख्यश्च देहश्च काहलिः सर्वकामदः।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥ ३६ ॥
सर्वकामवरश्चैव सर्वदः सर्वतोमुखः।
आकाशनिर्विरूपश्च निपाती ह्यवशः खगः ॥ ३७ ॥
रौद्ररूपोंऽशुरादित्यो बहुरश्मिः सुवर्चसी।
वसुवेगो महावेगो मनोवेगो निशाचरः ॥ ३८ ॥
सर्ववासी श्रियावासी उपदेशकरोऽकरः।
मुनिरात्मनिरालोकः सम्भग्नश्च सहस्रदः ॥ ३९ ॥
पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥ ४० ॥
वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः।
सिद्धयोगी महर्षिश्च सिद्धार्थः सिद्धसाधकः ॥ ४१ ॥
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः।
महासेनो विशाखश्च षष्ठिभागो गवां पतिः ॥ ४२ ॥
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च।
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ॥ ४३ ॥
वाचस्पत्यो वाजसनो नित्यमाश्रितपूजितः।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ॥ ४४ ॥
ईशान ईश्वरः कालो निशाचारी पिनाकवान् ।
निमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरिः ॥ ४५ ॥
नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः।
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ॥ ४६ ॥

चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च।
लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः॥४७॥
बीजाध्यक्षो बीजकर्ता अध्यात्माऽनुगतो बलः।
इतिहासः सकल्पश्च गौतमोऽथ निशाकरः॥४८॥
दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः।
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः॥४९॥
अक्षरं परमं ब्रह्म बलवच्चक्र एव च।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतः॥५०॥
बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित्।
वेदकारो मन्त्रकारो विद्वान् समरमर्दनः॥५१॥
महामेघनिवासी च महाघोरो वशीकरः।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः॥५२॥
वृषणः शङ्करो नित्यं वर्चस्वी धूमकेतनः।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः॥५३॥
स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः।
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः॥५४॥
कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम्।
महापादो महाहस्तो महाकायो महायशाः॥५५॥
महामूर्धा महामात्रो महानेत्रो निशालयः।
महान्तको महाकर्णो महोष्ठश्च महाहनुः॥५६॥
महानासो महाकम्बुर्महाग्रीवः श्मशानभाक्।
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः॥५७॥

लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः॥ ५८॥
महानखो महारोमो महाकोशो महाजटः।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः॥ ५९॥
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः॥ ६०॥
गण्डली मेरुधामा च देवाधिपतिरेव च।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः॥ ६१॥
यजुः पादभुजो गुह्यः प्रकाशो जङ्गमस्तथा।
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः॥ ६२॥
उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः।
नाभिर्नन्दिकरो भावः पुष्करः स्थपतिः स्थिरः॥ ६३॥
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः।
नक्तं कलिश्च कालश्च मकरः कालपूजितः॥ ६४॥
सगणो गणकारश्च भूतवाहनसारथिः।
भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः॥ ६५॥
लोकपालस्तथा लोको महात्मा सर्वपूजितः।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः॥ ६६॥
आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः॥ ६७॥
कपिलः कपिशः शुक्ल आयुश्चैव परोऽपरः।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः॥ ६८॥

परश्वधायुधो देव अनुकारी सुबान्धवः।
तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः॥ ६९॥

उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः॥ ७०॥

बन्धनो बन्धकर्ता च सुबन्धनविमोचनः।
सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः॥ ७१॥

बहुधा निन्दितः शर्वः शङ्करः शङ्करोऽधनः।
अमरेशो महादेवो विश्वदेवः सुरारिहा॥ ७२॥

अहिर्बुध्न्योऽनिलाभश्च चेकितानो हविस्तथा।
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः॥ ७३॥

धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः॥ ७४॥

प्रभावः सर्वगो वायुरर्यमा सविता रविः।
उषङ्गुश्च विधाता च मान्धाता भूतभावनः॥ ७५॥

विभुर्वर्णविभावी च सर्वकामगुणावहः।
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः॥ ७६॥

बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी।
कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः॥ ७७॥

सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः।
देवदेवः सुखासक्तः सदसत् सर्वरत्नवित्॥ ७८॥

कैलासगिरिवासी च हिमवद्गिरिसंश्रयः।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः॥७९॥

वणिजो वर्धकी वृक्षो वकुलश्चन्दनश्छदः।
सारग्रीवो महाजत्रुरलोलश्च महौषधः॥८०॥

सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः॥८१॥

प्रभावात्मा जगत्कालस्थालो लोकहितस्तरुः।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः॥८२॥

भूतालयो भूतपतिरहोरात्रमनिन्दितः ॥८३॥

वाहिता सर्वभूतानां निलयश्च विभुर्भवः।
अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः॥८४॥

धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः।
गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरिः॥८५॥

हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः॥८६॥

गान्धारश्च सुवासश्च तपःसक्तो रतिर्नरः।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः॥८७॥

महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आदेशः सर्वगन्धसुखावहः॥८८॥

तोरणस्तारणो वातः परिधी पतिखेचरः।
संयोगो वर्धनो वृद्धो अतिवृद्धो गुणाधिकः॥८९॥

नित्यमात्मसहायश्च देवासुरपतिः पतिः।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः॥९०॥
आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः।
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः॥९१॥
शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः।
अक्षश्च रथयोगी च सर्वयोगी महाबलः॥९२॥
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः।
निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः॥९३॥
रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित्।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः॥९४॥
आरोहणोऽधिरोहश्च शीलधारी महायशाः।
सेनाकल्पो महाकल्पो योगो युगकरो हरिः॥९५॥
युगरूपो महारूपो महानागहनो वधः।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः॥९६॥
बहुमालो महामालः शशी हरसुलोचनः।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः॥९७॥
त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः।
बिन्दुर्विसर्गः सुमुखः शरः सर्वायुधः सहः॥९८॥
निवेदनः सुखाजातः सुगन्धारो महाधनुः।
गन्धपाली च भगवानुत्थानः सर्वकर्मणाम्॥९९॥
मन्थानो बहुलो वायुः सकलः सर्वलोचनः।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान्॥१००॥

छत्रं सुच्छत्रो विख्यातो लोकः सर्वाश्रयः क्रमः।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः॥ १०१॥

हर्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात्।
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः॥ १०२॥

सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत्।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः॥ १०३॥

ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान्।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः॥ १०४॥

गभस्तिर्ब्रह्मकृद्-ब्रह्मी ब्रह्मविद्-ब्राह्मणो गतिः।
अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः॥ १०५॥

ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः।
चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः॥ १०६॥

कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृत्।
उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः॥ १०७॥

वरो वराहो वरदो वरेण्यः सुमहास्वनः।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः॥ १०८॥

पीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत्।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः॥ १०९॥

चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः।
साध्यर्षिर्वसुरादित्यो विवस्वान् सविताऽमृतः॥ ११०॥

व्यासः सर्गः सुसंक्षेपो विस्तरः पर्ययो नरः।
ऋतुः संवत्सरो मासः पक्षः सङ्ख्यासमापनः॥ १११॥

कलाः काष्ठा लवा मात्रा मुहूर्ताहः क्षपाः क्षणाः।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः॥ ११२॥
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ११३॥
निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परागतिः।
देवासुरविनिर्माता देवासुरपरायणः॥ ११४॥
देवासुरगुरुर्देवो देवासुरनमस्कृतः।
देवासुरमहामात्रो देवासुरगणाश्रयः॥ ११५॥
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः।
देवातिदेवो देवर्षिर्देवासुरवरप्रदः॥ ११६॥
देवासुरेश्वरो विश्वो देवासुरमहेश्वरः।
सर्वदेवमयोऽचिन्त्यो देवतात्माऽऽत्मसम्भवः॥ ११७॥
उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः॥ ११८॥
विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः।
सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः॥ ११९॥
गुहः कान्तो निजः सर्गः पवित्रं सर्वपावनः।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः॥ १२०॥
अभिरामः सुरगणो विरामः सर्वसाधनः।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः॥ १२१॥
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः।
सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः॥ १२२॥

व्रताधिपः परं ब्रह्म भक्तानां परमागतिः।
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥ १२३ ॥

श्रीमान् श्रीवर्धनो जगत् ॐ नम इति।

॥ उत्तरभागः ॥

यथा प्रधानं भगवान् इति भक्त्या स्तुतो मया।
यं न ब्रह्मादयो देवा विदुस्तत्वेन नर्षयः ॥ १ ॥

स्तोतव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् ।
भक्तिं त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ २ ॥

ततोऽप्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः।

शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्धनैः।
नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना ॥ ३ ॥

ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम् ।
स्तूयमानो महादेवस्तुष्यते नियमात्मभिः ॥ ४ ॥

भक्तानुकम्पी भगवान् आत्मसंस्थाकरो विभुः।
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ॥ ५ ॥

आस्तिकाः श्रद्दधानाश्च बहुभिर्जन्मभिः स्तवैः।
भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ॥ ६ ॥

कर्मणा मनसा वाचा भावेनामिततेजसः।
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ॥ ७ ॥

उन्मिषन्निमिषञ्चैव चिन्तयन्तः पुनः पुनः।
शृण्वन्तः श्रावयन्तश्च कथयन्तश्च ते भवम् ॥ ८ ॥

स्तुवन्तः स्तूयमानाश्च तुष्यन्ति च रमन्ति च।
जन्मकोटिसहस्रेषु नानासंसारयोनिषु॥९॥

जन्तोर्विगतपापस्य भवे भक्तिः प्रजायते।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः॥१०॥

भाविनः कारणे चास्य सर्वयुक्तस्य सर्वथा।
एतद्देवेषु दुष्प्रापं मनुष्येषु च लभ्यते॥११॥

निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी।
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम्।
येन यान्ति परां सिद्धिं तद्भावगतचेतसः॥१२॥

ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम्।
प्रपन्नवत्सलो देवः संसारात् तान् समुद्धरेत्॥१३॥

एवम् अन्ये विकुर्वन्ति देवाः संसारमोचनम्।
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम्॥१४॥

इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुद्धबुद्धिना॥१५॥

स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत्।
गीयते च स बुद्ध्येत ब्रह्मा शङ्करसन्निधौ॥१६॥

इदं पुण्यं पवित्रं च सर्वदा पापनाशनम्।
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा॥१७॥

एवमेतत् पठन्ते य एकभक्त्या तु शङ्करम्।
या गतिः साङ्ख्ययोगानां व्रजन्त्येतां गतिं तदा॥१८॥

स्तवमेतं प्रयत्नेन सदा रुद्रस्य सन्निधौ।
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ॥१९॥
एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थिथम् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥२०॥
मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥२१॥
तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः।
वैवस्वताय मनवे गौतमः प्राह माधव ॥२२॥
नारायणाय साध्याय समाधिष्ठाय धीमते।
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ॥२३॥
नाचिकेताय भगवान् आह वैवस्वतो यमः।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ॥२४॥
मार्कण्डेयान्मया प्राप्तं नियमेन जनार्दन।
तवाप्यहम् अमित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ॥२५॥
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन सम्मितम्।
नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः।
पिशाचा यातुधानाश्च गुह्यका भुजगा अपि ॥२६॥
यः पठेत शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥२७॥

जैगीषव्य उवाच

ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा।
यत्नेनान्येन बलिना वारणस्यां युधिष्ठिर ॥२८॥

वाराणस्यां युधिष्ठिर ॐ नम इति।

गर्ग उवाच

चतुःषष्ट्यङ्गमददत् कलाज्ञानं ममाद्भुतम् ।
सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव॥ २९॥

मनोयज्ञेन पाण्डव ॐ नम इति।

वैशम्पायन उवाच

ततः कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतां वरः।

युधिष्ठिरं धर्मनिधिं पुरुहूतमिवेश्वरः।
उपमन्युर्मयि प्राह तपन्निव दिवाकरः॥ ३०॥

अशुभैः पापकर्माणो ये नराः कलुषीकृताः।

ईशानं न प्रपद्यन्ते तमोराजसवृत्तयः।
ईश्वरं सम्प्रपद्यन्ते द्विजा भावितभावनाः॥ ३१॥

एवमेव महादेव भक्ता ये मानवा भुवि।
न ते संसारवशगा इति मे निश्चिता मतिः॥ ३२॥

इति मे निश्चिता मतिः ॐ नम इति।

॥ इति श्रीमन्महाभारते शतसहस्रिकायां
संहितायां वैयसिक्याम् अनुशासनपर्वणि अष्टादशोऽध्यायः॥

दुःस्वप्न-दुःशकुन-दुर्गति-दौर्मनस्य
दुर्भिक्ष-दुर्व्यसन-दुःसह-दुर्यशांसि ।
उत्पात-ताप-विषभीतिम् असद्-ग्रहार्तिम्
व्याधींश्च नाशयतु मे जगतामधीशः॥

## ॥ शिवमहिम्नः स्तोत्रम् ॥

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः।
अथाऽवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः॥ १॥

अतीतः पन्थानं तव च महिमा वाङ्मनसयोः
अतद्-व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः॥ २॥

मधुस्फीता वाचः परमममृतं निर्मितवतः
तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता॥ ३॥

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तु व्यस्तं तिस्त्रुषु गुणभिन्नासु तनुषु।
अभव्यानामस्मिन् वरद रमणीयामरमणीम्
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः॥ ४॥

किमीहः किङ्कायः स खलु किमुपायस्त्रिभुवनम्
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यनवसर दुःस्थो हतधियः
कुतर्कोऽयं कांश्चित् मुखरयति मोहाय जगतः॥ ५॥

अजन्मानो लोकाः किमवयववन्तोऽपि जगताम्
अधिष्ठातारं किं भवविधिरनादृत्य भवति।
अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे॥ ६॥

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिल नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥ ७॥

महोक्षः खट्वाङ्गं परशुरजिनं भस्मफणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम्।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति॥ ८॥

ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याऽध्रौव्ये जगति गदति व्यस्तविषये।
समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता॥ ९॥

तवैश्वर्यं यत्नाद्-यदुपरि विरिञ्चिर्हरिरधः
परिच्छेतुं यातावनिलमनलस्कन्धवपुषः।
ततो भक्तिश्रद्धा-भरगुरु-गृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति॥ १०॥

अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत-रणकण्डू-परवशान् ।
शिरःपद्मश्रेणी-रचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ११ ॥

अमुष्य त्वत्सेवा-समधिगतसारं भुजवनम्
बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्यापातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्-ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीं
अधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ।
न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयोः
न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥

अकाण्ड-ब्रह्माण्ड-क्षयचकित-देवासुरकृपा
विधेयस्याऽऽसीद्-यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवन-भयभङ्ग-व्यसनिनः ॥ १४ ॥

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥ १५ ॥

महीपादाघाताद्-व्रजति सहसा संशयपदम्
पदं विष्णोर्भ्राम्यद्भुज-परिघ-रुग्ण-ग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृत-जटा-ताडित-तटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता॥१६॥

वियद्व्यापी तारागण-गुणित-फेनोद्गम-रुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमिति
अनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः॥१७॥

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथ-चरण-पाणिः शर इति।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बर विधिः
विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः॥१८॥

हरिस्ते साहस्रं कमल बलिमाधाय पदयोः
यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषः
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥१९॥

क्रतौ सुप्ते जाग्रत् त्वमसि फलयोगे क्रतुमताम्
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदान-प्रतिभुवम्
श्रुतौ श्रद्धां बध्वा दृढपरिकरः कर्मसु जनः॥२०॥

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृताम्
ऋषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः।
क्रतुभ्रंशस्त्वत्तः क्रतुफल-विधान-व्यसनिनः
ध्रुवं कर्तुं श्रद्धा विधुरमभिचाराय हि मखाः॥२१॥

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरम्
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुम्
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः॥२२॥

स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरत-देहार्ध-घटनात्
अवैति त्वामद्धा बत वरद मुग्धा युवतयः॥२३॥

श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराः
चिता-भस्मालेपः स्रगपि नृकरोटी-परिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथाऽपि स्मर्तॄणां वरद परमं मङ्गलमसि॥२४॥

मनः प्रत्यक् चित्ते सविधमविधायात्त-मरुतः
प्रहृष्यद्रोमाणः प्रमद-सलिलोत्सङ्गति-दृशः।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान् ॥२५॥

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः
त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरम्
न विद्मस्तत्तत्त्वं वयमिह तु यत् त्वं न भवसि॥२६॥

त्रयीं तिस्रो वृत्तिस्त्रिभुवनमथो त्रीनपि सुरान्
अकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तव्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥

भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहान्
तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मैधाम्ने प्रणिहित-नमस्योऽस्मि भवते॥२८॥

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमः
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमः
नमः सर्वस्मै ते तदिदमतिसर्वाय च नमः॥२९॥

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत् संहारे हराय नमो नमः।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः॥३०॥

कृश-परिणति-चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुण-सीमोल्लङ्घिनी शश्वदृद्धिः।
इति चकितममन्दीकृत्य मां भक्तिराधाद्-
वरद चरणयोस्ते वाक्य-पुष्पोपहारम् ॥३१॥

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवर-शाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति॥३२॥

असुर-सुर-मुनीन्द्रैरर्चितस्येन्दुमौलेः
ग्रथित-गुणमहिम्नो निर्गुणस्येश्वरस्य।
सकल-गण-वरिष्ठः पुष्पदन्ताभिधानः
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार॥३३॥

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्
पठति परमभक्त्या शुद्धचित्तः पुमान् यः।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतर-धनायुः पुत्रवान् कीर्तिमांश्च॥३४॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥३५॥

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः।
महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥३६॥

कुसुमदशन-नामा सर्वगन्धर्वराजः
शशिधरवर-मौलेर्देवदेवस्य दासः।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्-दिव्य-दिव्यं महिम्नः॥३७॥

सुरगुरुमभिपूज्य स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३८॥

आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम् ।
अनौपम्यं मनोहारि सर्वमीश्वरवर्णनम् ॥३९॥

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः॥४०॥

तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर।
यादृशोऽसि महादेव तादृशाय नमो नमः॥४१॥

एककालं द्विकालं वा त्रिकालं यः पठेन्नरः।
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥४२॥

श्री पुष्पदन्त-मुखपङ्कज-निर्गतेन
स्तोत्रेण किल्बिष-हरेण हरप्रियेण।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः॥४३॥

॥इति श्रीपुष्पदन्तविरचितं शिवमहिम्नः स्तोत्रं सम्पूर्णम्॥

# ॥ ललितात्रिशतीस्तोत्रम् ॥

ककाररूपा कल्याणी कल्याणगुणशालिनी।
कल्याणशैलनिलया कमनीया कलावती॥ १ ॥

कमलाक्षी कल्मषघ्नी करुणामृतसागरा।
कदम्बकाननावासा कदम्बकुसुमप्रिया॥ २ ॥

कन्दर्पविद्या कन्दर्प-जनकापाङ्ग-वीक्षणा।
कर्पूरवीटी सौरभ्य-कल्लोलित-ककुप्तटा॥ ३ ॥

कलिदोषहरा कञ्जलोचना कम्रविग्रहा।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा॥ ४ ॥

एकाररूपा चैकाक्षर्यैकानेकाक्षराकृतिः।
एतत्तदित्यनिर्देश्या चैकानन्द-चिदाकृतिः॥ ५ ॥

एवमित्यागमाबोध्या चैकभक्ति-मदर्चिता।
एकाग्रचित्त-निर्ध्याता चैषणा रहिताद्दृता॥ ६ ॥

एलासुगन्धिचिकुरा चैनः कूटविनाशिनी।
एकभोगा चैकरसा चैकैश्वर्य-प्रदायिनी॥ ७ ॥

एकातपत्र-साम्राज्य-प्रदा चैकान्तपूजिता।
एधमानप्रभा चैजदनेकजगदीश्वरी॥ ८ ॥

एकवीरदि-संसेव्या चैकप्राभव-शालिनी।
ईकाररूपा चेशित्री चेप्सितार्थ-प्रदायिनी॥ ९ ॥

ईद्दृगित्य-विनिर्देश्या चेश्वरत्व-विधायिनी।
ईशानादि-ब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा॥ १० ॥

ईक्षित्रीक्षण-सृष्टाण्ड-कोटिरीश्वर-वल्लभा।
ईडिता चेश्वरार्धाङ्ग-शरीरेशाधि-देवता॥ ११॥

ईश्वर-प्रेरणकरी चेशताण्डव-साक्षिणी।
ईश्वरोत्सङ्ग-निलया चेतिबाधा विनाशिनी॥ १२॥

ईहाविराहिता चेशशक्ति-रीषत् स्मितानना।
लकाररूपा ललिता लक्ष्मी वाणी निषेविता॥ १३॥

लाकिनी ललनारूपा लसद्दाडिम-पाटला।
ललन्तिकालसत्फाला ललाट-नयनार्चिता॥ १४॥

लक्षणोज्ज्वल-दिव्याङ्गी लक्षकोट्यण्ड-नायिका।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः॥ १५॥

ललामराजदलिका लम्बिमुक्तालताञ्चिता।
लम्बोदर-प्रसूर्लभ्या लज्जाढ्या लयवर्जिता॥ १६॥

ह्रीङ्काररूपा ह्रीङ्कारनिलया ह्रीम्पदप्रिया।
ह्रीङ्कारबीजा ह्रीङ्कारमन्त्रा ह्रीङ्कारलक्षणा॥ १७॥

ह्रीङ्कारजपसुप्रीता ह्रीम्मती ह्रींविभूषणा।
ह्रींशीला ह्रीम्पदाराध्या ह्रीङ्गर्भा ह्रीम्पदाभिधा॥ १८॥

ह्रीङ्कारवाच्या ह्रीङ्कारपूज्या ह्रीङ्कारपीठिका।
ह्रीङ्कारवेद्या ह्रीङ्कारचिन्त्या ह्रीं-ह्रीं-शरीरिणी॥ १९॥

हकाररूपा हलधृत्पूजिता हरिणेक्षणा।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता॥ २०॥

हयारूढा सेविताङ्घ्रिर्हयमेध-समर्चिता।
हर्यक्षवाहना हंसवाहना हतदानवा॥ २१॥

हत्यादिपापशमनी हरिदश्वादि-सेविता।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्ति-प्रियाङ्गना॥ २२॥

हरिद्राकुङ्कुमा दिग्धा हर्यश्वाद्यमरार्चिता।
हरिकेशसखी हादिविद्या हल्लामदालसा॥ २३॥

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला।
सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातना॥ २४॥

सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी॥ २५॥

सर्वाधारा सर्वगता सर्वावगुणवर्जिता।
सर्वारुणा सर्वमाता सर्वभूषण-भूषिता॥ २६॥

ककारार्था कालहन्त्री कामेशी कामितार्थदा।
कामसञ्जीविनी कल्या कठिनस्तन-मण्डला॥ २७॥

करभोरुः कलानाथ-मुखी कचजिताम्भुदा।
कटाक्षस्यन्दि-करुणा कपालि-प्राणनायिका॥ २८॥

कारुण्य-विग्रहा कान्ता कान्तिधूत-जपावलिः।
कलालापा कम्बुकण्ठी करनिर्जित-पल्लवा॥ २९॥

कल्पवल्ली समभुजा कस्तूरी तिलकाञ्चिता।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला॥ ३०॥

हारहारि-कुचाभोगा हाकिनी हल्यवर्जिता।
हरित्पति-समाराध्या हठात्कार-हतासुरा॥ ३१॥

हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा।
हल्लीसलास्य-सन्तुष्टा हंसमन्त्रार्थ-रूपिणी॥ ३२॥

हानोपादान-निर्मुक्ता हर्षिणी हरिसोदरी।
हाहाहूहू-मुख-स्तुत्या हानि-वृद्धि-विवर्जिता॥ ३३॥

हय्यङ्गवीन-हृदया हरिकोपारुणांशुका।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी॥ ३४॥

लास्य-दर्शन-सन्तुष्टा लाभालाभ-विवर्जिता।
लङ्घ्येतराज्ञा लावण्य-शालिनी लघु सिद्धिदा॥ ३५॥

लाक्षारस-सवर्णाभा लक्ष्मणाग्रज-पूजिता।
लभ्यतरा लब्धभक्ति-सुलभा लाङ्गलायुधा॥ ३६॥

लग्नचामर-हस्त-श्रीशारदा परिवीजिता।
लज्जापद-समाराध्या लम्पटा लकुलेश्वरी॥ ३७॥

लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः।
ह्रीङ्कारिणी च ह्रीङ्करी ह्रीम्मध्या ह्रींशिखामणिः॥ ३८॥

ह्रीङ्कार-कुण्डाग्नि-शिखा ह्रीङ्कार-शशिचन्द्रिका।
ह्रीङ्कार-भास्कररुचिर्ह्रीङ्काराम्भोद-चञ्चला ॥ ३९॥

ह्रीङ्कार-कन्दाङ्कुरिका ह्रीङ्कारैक-परायणाम्।
ह्रीङ्कार-दीर्घिकाहंसी ह्रीङ्कारोद्यान-केकिनी॥ ४०॥

ह्रीङ्कारारण्य-हरिणी ह्रीङ्कारावाल-वल्लरी।
ह्रीङ्कार-पञ्जरशुकी ह्रीङ्काराङ्गण-दीपिका॥ ४१॥

ह्रीङ्कार-कन्दरा सिंही ह्रीङ्काराम्भोज-भृङ्गिका।
ह्रीङ्कार-सुमनो माध्वी ह्रीङ्कार-तरुमञ्जरी॥ ४२॥

सकाराख्या समरसा सकलागम-संस्तुता।
सर्ववेदान्त-तात्पर्यभूमिः सदसदाश्रया॥ ४३॥

सकला सच्चिदानन्दा साध्या सद्गतिदायिनी।
सनकादिमुनिध्येया सदाशिव-कुटुम्बिनी॥४४॥

सकालाधिष्ठान-रूपा सत्यरूपा समाकृतिः।
सर्वप्रपञ्च-निर्मात्री समनाधिक-वर्जिता॥४५॥

सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेश्वरी।
ककारिणी काव्यलोला कामेश्वरमनोहरा॥४६॥

कामेश्वर-प्रणानाडी कामेशोत्सङ्गवासिनी।
कामेश्वरालिङ्गिताङ्गी कामेश्वर-सुखप्रदा॥४७॥

कामेश्वर-प्रणयिनी कामेश्वर-विलासिनी।
कामेश्वर-तपःसिद्धिः कामेश्वर-मनःप्रिया॥४८॥

कामेश्वर-प्राणनाथा कामेश्वर-विमोहिनी।
कामेश्वर-ब्रह्मविद्या कामेश्वर-गृहेश्वरी॥४९॥

कामेश्वराह्लादकरी कामेश्वर-महेश्वरी।
कामेश्वरी कामकोटिनिलया काङ्क्षितार्थदा॥५०॥

लकारिणी लब्धरूपा लब्धधीर्लब्ध-वाञ्छिता।
लब्धपाप-मनोदूरा लब्धाहङ्कार-दुर्गमा॥५१॥

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी॥५२॥

लब्धातिशय-सर्वाङ्ग-सौन्दर्या लब्धविभ्रमा।
लब्धरागा लब्धपतिर्लब्ध-नानागमस्थितिः॥५३॥

लब्धभोगा लब्धसुखा लब्धहर्षाभिपूजिता।
ह्रीङ्कार-मूर्तिर्ह्रीङ्कार-सौधशृङ्गकपोतिका ॥५४॥

ह्रीङ्कार-दुग्धाब्धि-सुधा ह्रीङ्कार-कमलेन्दिरा।
ह्रीङ्कार-मणिदीपार्चिर्ह्रीङ्कार-तरुशारिका ॥५५॥

ह्रीङ्कार-पेटक-मणिर्ह्रीङ्कारदर्श-बिम्बिता ।
ह्रीङ्कार-कोशासिलता ह्रीङ्कारास्थान-नर्तकी॥५६॥

ह्रीङ्कार-शुक्तिका मुक्तामणिर्ह्रीङ्कार-बोधिता।
ह्रीङ्कारमय-सौवर्णस्तम्भ-विद्रुम-पुत्रिका ॥५७॥

ह्रीङ्कार-वेदोपनिषद् ह्रीङ्काराध्वर-दक्षिणा।
ह्रीङ्कार-नन्दनाराम-नवकल्पक-वल्लरी ॥५८॥

ह्रीङ्कार-हिमवद्गङ्गा ह्रीङ्कारार्णव-कौस्तुभा।
ह्रीङ्कार-मन्त्र-सर्वस्वा ह्रीङ्कार-परसौख्यदा॥५९॥

॥इति श्री ब्रह्माण्डपुराणे उत्तराखण्डे
श्रीहयग्रीवागस्त्यसंवादे श्रीललितात्रिशती स्तोत्रकथनं सम्पूर्णम्॥

# ॥ सौन्दर्यलहरी ॥

## ॥ आनन्दलहरी ॥

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥ १ ॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवम्
विरिञ्चिः सञ्चिन्वन् विरचयति लोकानविकलम् ।
बहत्येनं शौरिः कथमपि सहस्रेण शिरसाम्
हरः सङ्क्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥

अविद्यानामन्तस्तिमिर-मिहिरद्वीपनगरी
जडानां चैतन्य-स्तबक-मकरन्द-स्रुतिझरी।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपु-वराहस्य भवती॥ ३ ॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेका नैवासि प्रकटितवराभीत्यभिनया।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकम्
शरण्ये लोकानां तव हि चरणावेव निपुणौ॥ ४ ॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीम्
पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः
वसन्तः सामन्तो मलयमरुदायोधनरथः।
तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपाम्
अपाङ्गात्ते लब्ध्वा जगदिद-मनङ्गो विजयते॥६॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका॥७॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयाम्
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्॥८॥

महीं मूलाधारे कमपि मणिपूरे हुतवहम्
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि।
मनोऽपि भ्रूमध्ये सकलमपि भित्वा कुलपथम्
सहस्रारे पद्मे सह रहसि पत्या विहरसे॥९॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयम्
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि॥१०॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः॥११॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुम्
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः।
यदालोकौत्सुक्यादमरललना यान्ति मनसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥१२॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडम्
तवापाङ्गालोके पतितमनुधावन्ति शतशः।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया
हठात् त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः॥१३॥

क्षितौ षट्पञ्चाशद्-द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले।
दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥१४॥

शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमुकुटाम्
वरत्रासत्राणस्फटिकघुटिकापुस्तककराम् ।
सकृन्नत्वां नत्वा कथमिव सतां सन्निदधते
मधुक्षीरद्राक्षामधुरिमधुरीणाः कणितयः॥१५॥

कवीन्द्राणां चेतःकमलवनबालातपरुचिम्
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरी
गभीराभिर्वाग्भिर्विदधति सतांरञ्जनममी ॥ १६ ॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः
वशिन्याद्याभिस्त्वां सह जननि संचिन्तयति यः ।
स कर्ता काव्यानां भवति महतां भङ्गिरुचिभिः
वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥

तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिः
दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥ १८ ॥

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्धं ध्यायेद्योहरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसम्
हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टान् दृष्ट्या सुखयति सुधाऽऽसारसिरया ॥ २० ॥

तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीम्
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥२१॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणाम्
इति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥२२॥

त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्धं शम्भोरपरमपि शङ्के हृतमभूत् ।
यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूडालमुकुटम् ॥२३॥

जगत्सूते धाता हरिरवति रुद्रः क्षपयते
तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः
तवऽऽज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः॥२४॥

त्रयाणां देवानां त्रिगुणजनितानां तव शिवे
भवेत् पूजा पूजा तव चरणयोर्या विरचिता।
तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन् मुकुलितकरोत्तंसमकुटाः॥२५॥

विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिम्
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्री माहेन्द्री विततिरपि सम्मीलित-दृशां
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ॥२६॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः।
प्रणामस्संवेशस्सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥२७॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीम्
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः।
कराळं यत्क्ष्वेळं कबलितवतः कालकलना
न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा॥२८॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमकुटम् ।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनम्
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते॥२९॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाऽऽद्याभिरभितो
निषेव्ये नित्ये त्वामिति सदा भावयति यः।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥३०॥

चतुष्षष्ट्या तन्त्रैः सकलमतिसंधाय भुवनम्
स्थितस् तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥३१॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥३२॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोः
निधायैके नित्ये निरवधिमहाभोगरसिकाः।
भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः
शिवाऽग्नौ जुह्वन्तः सुरभिघृतधाराऽऽहुतिशतैः॥३३॥

शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगम्
तवात्मानं मन्ये भगवति नवात्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः संबन्धो वां समरसपरानन्दपरयोः॥३४॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवति भावेन बिभृषे॥३५॥

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरम्
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।
यमाराध्यन् भक्त्या रविशशिशुचीनामविषये
निरालोकेऽलोके निवसति हि भालोकभवने ॥ ३६ ॥

विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकम्
शिवं सेवे देवीमपि शिवसमानव्यवसिताम् ।
ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणिम्
विधूतान्तर्ध्वान्ताविलसति चकोरीव जगती ॥ ३७ ॥

समुन्मीलत् संवित् कमलमकरन्दैकरसिकम्
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणतिः
यदादत्ते दोषाद्-गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥

तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतम्
तमीडे संवर्तं जननि महतीं तां च समयाम् ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा यद्दृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥

तटित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव श्यामं मेघं कमपि मणिपूरैकशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥

तवाधारे मूले सह समयया लास्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥४१॥

॥सौन्दर्यलहरी॥

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितम्
किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः।
स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलम्
धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ॥४२॥

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनम्
घनस्निग्धश्लक्ष्णं चिकुरनिकुरम्बं तव शिवे।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन् मन्ये वलमथनवाटीविटपिनाम् ॥४३॥

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर
द्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥४४॥

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः॥४५॥

ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमपि सम्भूय च मिथः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥४६॥

भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम् ।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥४७॥

अहः सूते सव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते संध्यां दिवसनिशयोरन्तरचरीम् ॥४८॥

विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपाधाराधारा किमपि मधुरा भोगवतिका।
अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥४९॥

कवीनां संदर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलौ
असूयासंसर्गादलिकनयनं किंचिदरुणम् ॥५०॥

शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा॥५१॥

गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती
पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासं कलयतः॥५२॥

विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजः सत्त्वं बिभ्रत् तम इति गुणानां त्रयमिव॥५३॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि संभेदमनघम् ॥५४॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्यतनये।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः॥५५॥

तवापर्णे कर्णेजपनयनपैशुन्यचकिता
निलीयन्ते तोये नियतमनिमेषाः शफरिकाः।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयम्
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति॥५६॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः॥५७॥

अरालं ते पालीयुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलसन्
अपाङ्गव्यासङ्गो दिशति शरसंधानधिषणाम्॥५८॥

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलम्
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम्।
यमारुह्य द्रुह्यत्यवनिरथम् अर्केन्दुचरणं
महावीरो मारः प्रमथपतये सज्जितवते॥५९॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम्।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते॥६०॥

असौ नासावंशस्तुहिनगिरिवंशध्वजपटि
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहत्यन्तर्मुक्ताः शिशिरकरनिश्वासगलितम्
समृद्ध्या यस्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥

प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता।
न बिम्बं त्वद्बिम्बप्रतिफलनरागादरुणितम्
तुलामध्यारोढुं कथमिव विलज्जेत कलया॥ ६२ ॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबताम्
चकोराणामासीदतिरसतया चञ्चुजडिमा।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया॥ ६३ ॥

अविश्रान्तं पत्युर्गुणगणकथाऽऽम्रेडनजपा
जपापुष्पच्छाया तव जननि जिह्वा जयति सा।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा॥ ६४॥

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः
निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकला
विलीयन्ते मातस्तव वदनताम्बूलकबलाः ॥ ६५॥

विपञ्च्या गायन्ती विविधमपदानं पशुपतेः
त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने।
तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥

कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया।
करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथङ्कारं ब्रूमस्तव चुबुकमौपम्यरहितम् ॥ ६७ ॥

भुजाश्लेषान् नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागरुबहुलजम्बालमलिना
मृणालीलालित्यम् वहति यदधो हारलतिका ॥ ६८ ॥

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाकरभुवाम्
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥

मृणालीमृद्वीनां तव भुजलतानां चतसृणाम्
चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः।
नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥

नखानामुद्योतैर्नवनलिनरागं विहसताम्
करांणां ते कान्तिं कथय कथयामः कथमुमे।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलम्
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥७१॥

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगम्
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम्।
यदालोक्याशङ्काऽऽकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति॥७२॥

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
न संदेहस्पन्दो नगपतिपताके मनसि नः।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ॥७३॥

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम्।
कुचाभोगो बिम्बाधररुचिभिरन्तः शबलिताम्
प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते॥७४॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वत इव।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता॥७५॥

हरक्रोधज्वालाऽऽवलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति॥ ७६ ॥

यदेतत् कालिन्दीतनुतरतरङ्गाकृति शिवे
कृशे मध्ये किंचिज्जननि तव तद्भाति सुधियाम् ।
विमर्दादन्योऽन्यं कुचकलशयोरन्तरगतम्
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७७ ॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता
निजावालं कुण्डं कुसुमशरतेजोहुतभुजः।
रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते॥ ७८ ॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेर्नारीतिलक शनकैस्त्रुट्यत इव।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थास्थेम्नो भवतु कुशलं शैलतनये॥ ७९ ॥

कुचौ सद्यःस्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता।
तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव॥ ८० ॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीम्
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च॥ ८१॥

करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीम्
उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि॥ ८२॥

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत।
यदग्रे दृश्यन्ते दश शरफलाः पादयुगली
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः॥ ८३॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे॥ ८५॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितम्
ललाटे भर्तारं चरणकमले ताडयति ते।
चिरादन्तःशल्यं दहनकृतमुन्मूलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा॥८६॥

हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ
निशायां निद्राणां निशि चरमभागे च विशदौ।
वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनाम्
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥८७॥

पदं ते कीर्तीनां प्रपदमपदं देवि विपदाम्
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा॥८८॥

नखैर्नाकस्त्रीणां करकमलसंकोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि चरणौ।
फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ॥८९॥

ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशीम्
अमन्दं सौन्दर्यप्रकरमकरन्दम् विकिरति।
तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे
निमज्जन् मज्जीवः करणचरणः षड्चरणताम् ॥९०॥

पदन्यासक्रीडापरिचयमिवारब्धुमनसः
स्खलन्तस्ते खेलं भवनकलहंसा न जहति।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं चारुचरिते॥९१॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः।
त्वदीयानां भासां प्रतिफलनरागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥९२॥

अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा॥९३॥

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयम्
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिडयति नूनं तव कृते॥९४॥

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादा तरलकरणानामसुलभा।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलाम्
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः॥९५॥

कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः॥९६॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्।
तुरीया काऽपि त्वं दुरधिगमनिःसीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि॥९७॥

कदा काले मातः कथय कलितालक्तकरसम्
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम्॥९८॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा।
चिरं जीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान्॥९९॥

समानीतः पद्भ्यां मणिमुकुरतामम्बरमणिः
भयादास्यादन्तःस्तिमितकिरणश्रेणिमसृणः।
दधाति त्वद्वक्त्रप्रतिफलनमश्रान्तविकचम्
निरातङ्कं चन्द्रान्निजहृदयपङ्केरुहमिव॥१००॥

समुद्भूतस्थूलस्तनभरमुरश्चारु हसितम्
कटाक्षे कन्दर्पः कतिचन कदम्बद्युति वपुः।
हरस्य त्वद्भ्रान्तिं मनसि जनयाम् स्म विमला
भवत्या ये भक्ताः परिणतिरमीषामियमुमे ॥१०१॥

निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निराघाटज्ञाने नियमपरचित्तैकनिलये।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतपदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥१०२॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणम्
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१०३॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता सौन्दर्यलहरी सम्पूर्णा ॥